

# BHAKTIMANJARÎ

BY

HIS HIGHNESS

SWÂTI TIRUNÂL

**SRÎ RÂMA VARMA KULASEKHARA PERUMÂL**

Maharajah of Travancore

$\frac{988 \text{ M. E.}}{1813 \text{ A. D.}}$ to $\frac{1022 \text{ M. E.}}{1847 \text{ A. D.}}$

Edited with notes

BY

T. GAṆAPATI SÂSTRI,

*Principal, His Highness the Maha Rajah's Sanskrit College, Trivandrum.*

**PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHA RAJAH OF TRAVANCORE.**

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1904

॥ श्रीः ॥

# भक्तिमञ्जरी ।

९८८तमादि१०२२तमान्त-कोलम्बाब्दजीविना

स्वातिना महामहिम्ना

श्रीरामवर्मकुलशेखरवञ्चिमहाराजेन

प्रणीता

अनन्तशयनस्थराजकीयसंस्कृतपाठशालाध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधिता

लघुटिप्पण्या च संयोजिता ।

सा च

अनन्तशयने

महामहिमश्रीमूलकवञ्चिमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

कोलम्बाब्दाः १०७९, क्रैस्ताब्दाः १९०४.

# PREFACE.

Under command of His Gracious Highness the Maharajah, a Devanagari branch was recently opened in the Government Printing Press here, mainly for the purpose of publishing the ancient and hitherto unprinted Sanskrit works in the Palace Library; and the editing of these works was graciously entrusted to me.

When work was accordingly about to be commenced, M. R. Ry. Kerala Varma Avl. C. S. I., Valia Koil Tampuran, in charge of the Palace Library, suggested that it would be appropriate to begin with the work, "Bhaktimanjari" (भक्तिमञ्जरी), and His Highness gladly approved of the suggestion as the work is a composition of His Highness' Granduncle, H. H. Rama Varma Swati Tîrunâl Kulasekhara Perumal, and also because it relates to the praise of His Highness' household Deity, Sri Padmanabha. The work has accordingly been taken up first for publication.

This work, Bhaktimanjari (भक्तिमञ्जरी), though not so much known as the rest of the Royal poet's literary works, was luckily not lost; and what is still more fortunate, the only manuscript copy at present available happens to be in the handwriting of the author himself. I have examined the manuscript carefully, and edited the work with a few elucidatory notes here and there. On account of his veneration for the author and kindness towards me, the learned Valia Koil Tampuran, whose suggestions command great respect from me, has gone through the work from beginning to end and given me the benefit of his valuable advice.

This work mostly resembles the Narayaniya (भागवत in a nutshell) of the poet, Narayana Bhatta of Kerala. It is

divided into ten Satakas, each Sataka being composed in a different metre and the same metre being kept up throughout each Sataka, except in the eighth and tenth. The very name Bhaktimanjari (भक्तिमञ्जरी) plainly indicates the subject with which the book deals. The Royal poet begins with a prayer to the Deity for the infusion of Devotion (भक्ति), and after pointing in the first four Satakas, by applying the test of reason and appealing to authority and the Puranic stories, its towering prominence among the means of attaining the 'objects of life' (पुरुषार्थ), he classifies Devotion (भक्ति) at the end of the fourth Sataka into nine kinds.

'श्रुतिर्वरद! कीर्त्तनं स्मरणमङ्घ्रिसंसेवनं
रमावर! तथार्चनं त्वयि च वन्दनं दासता ।
त्वयैव सह सख्यमच्युत! निवेदनं चात्मन-
स्त्वयीति नवधा स्मृता भवति भक्तिरत्युत्तमा ॥' (4–100)

The first five of these are dealt with in their order, in detail in Satakas five to nine; and the remaining four in the tenth and last Sataka, where the work closes, as it began, with a heartfelt prayer to the Almighty that such devotion (भक्ति) may be vouchsafed to him.

The matters contained in this work have all been abstracted from Bhagavata, Vishnupurana and like works, and are treated here, some briefly and others at length. The work is remarkable for the expressiveness and sweetness of the language generally used, the flowing nature of the style employed, and the ease and naturalness of the figures of speech found throughout, which are quite in keeping with the sense of devotion (भक्ति) with which the work is replete.

The author, who was born under the auspices of the star Swati in the month of Mesha, 988 M. E. (1813 A. D.), was the son of Her Highness Lakshmi Ranee, the then

Sovereign of Travancore. As there was no male heir at the time in the Royal line, and as the right to sovereignty therefore accrued to the author while yet in the mother's womb, His Highness is generally spoken as गर्भश्रीमान् (Garbhasriman). Losing his Royal mother at the early age of two, the author was brought up by his aunt, Parvati Ranee, the then Regent and his father, the well known Rajah Rajah Varma Valia Koil Tampuran, of Changanaseri; and under this wholesome training he grew into a noble prince of high attainments. His Highness' knowledge of languages extended to Malayalam, Sanskrit, English, Mahratti, Telugu, Kanarese, Tamil, and Hindustani. The Maharajah also acquired proficiency in music (सङ्गीत) and poetry (साहित्य). By association with the British Residents, his tutor Mr. Subba Rao who was afterwards to become his Dewan, and his father and other worthy elders, aided in no small degree by his natural genius, the author was able to acquire knowledge of a high order in the art of Government, and at his sixteenth year he assumed charge of the State from the Regent. Magnanimity of character, courage, generosity, determination of will, righteousness and sympathy, all these qualities revealed themselves in His Highness even in boyhood. There is no neccessity to describe, as it can be easily imagined, how brightly the Maharajah with the extensive knowledge he possessed, must have made these qualities shine in him after he ascended the throne. Even now the magnanimous deeds of this sovereign are often ardently admired and praised by the people. The Maharajah did not survive his thirty-fourth year of age. It was after he assumed the responsibility of Government that the Royal author composed his famous works. It is indeed a matter for admiration, that this great king, by dint of his genius, was able in spite of his short life, to acquire knowledge of various arts and to find opportunities, in the midst of the cares of the State which he governed so well, for the composition of many works which have acquired for him his literary fame.

The following are his works:—

1. पद्मनाभशतकम् (Padmanabha Sataka)
2. स्यानन्दूरपुरवर्णनप्रबन्धः (Syanandurapura Varnana Prabandha.) *
3. अजामिलोपाख्यानम् (Ajamilopakhyana.)
4. कुचेलोपाख्यानम् (Kuchelopakhyana.)
5. सङ्गीतकीर्त्तनानि (Sangeetha Keertana, in Sanskrit, Telugu and other languages.)
6. उत्सववर्णनप्रबन्धः (Utsava Varnana Prabandha, in a mixture of Sanskrit and Malayalam.)
7. भक्तिमञ्जरी (Bhaktimanjari.)

Of these, I conjecture, Bhaktimanjari (भक्तिमञ्जरी) was composed towards the close of the author's life. Probably that is the reason why His Highness had not found opportunity to give it the publicity which the rest of his works had attained even in his lifetime. His Highness' musical compositions are treated with regard and esteem even in other countries.

This work, Bhaktimanjari (भक्तिमञ्जरी) which is now printed and published, deserves appreciation not only on account of our regard for poetry, and esteem for the author, but also because of the exalted nature of the subject dealt with in it.

Trivandrum,<br>29th June, 1904.

T. GAṆAPATI SASTRI.

---

* A commentary of this work by the father of His Highness the present Maharajah is extant.

# उपोद्घातः ।



इह राजगृहास्थितायां संस्कृतग्रन्थशालायां ये वर्तन्ते प्राचीना ग्रन्था अमुद्रितपूर्वाः, तान् देवनागरलिपिभिः क्रमशो मुद्रयितुं महामहिम्ना कृपानिधिना **श्रीमूलकरामवर्मकुलशेखरवञ्चिमहाराजेन** राजकीयमुद्रालये देवनागरमुद्रणविभागो व्यवस्थापितः, मुद्रणीयग्रन्थानां च संशोधने सदयमहं नियुक्तः ।

अथारब्धव्ये तत्र व्यापारे राजकीयसंस्कृतग्रन्थशालाया अधिपतिर्विद्वद्वतंसो वञ्चिमहाराज्ञीप्रियः सि. एस्. ऐ. **श्रीकेरलवर्मदेवो** 'भक्तिमञ्जरीं' प्रथममुद्रणार्हां मामुपादिशत् । सा हि स्वप्रमातुलेन स्वातिनक्षत्रजन्मना **श्रीरामवर्मकुलशेखरमहाराजेन** विरचितेति, स्वकुलदैवतपद्मनाभविषयेति च कृत्वा तदाभिप्राये श्रीमहाराजेन प्रतिनन्दिते तस्या मुद्रणमारब्धम् ।

सैषा भक्तिमञ्जरी स्वातिमहाराजस्य कृत्यन्तरवत् प्रचाराभावेऽपि दिष्ट्या न विलुप्ता; एककेऽपि कविस्वहस्तलिखित एव कोशे दिष्ट्या द्रष्टुं चासादिता । तदाधारेण चैनामहमवहितः पर्यशोधयम्; यथापेक्षं च पदार्थवैशद्याय परमलघुना टिप्पणेन समयोजयम् । एवं संशोधितामेनां कविगौरवेण मय्युपदेश्ये कृपया च महाकविः **श्रीकेरलवर्मदेव** आमूलाग्रमनुशोधितवान् । इत्थं संशोध्यानुशोध्य च कृतेऽप्यस्मिन् मुद्रणे यदि क्वचिदशुद्धमुपलभ्येत, तत् सज्जनाः सदयं पुनन्तु; नन्दन्तु च गुणग्रहणेन ।

एषा केरलीय**श्रीनारायणभट्टकृतस्य** श्रीभागवतसङ्ग्रहात्मनो नारायणीयस्य बहुत्रानुकुर्वती दशभिश्शतकैर्विभक्ता । वृत्तं चात्र प्रतिशतकं भिन्नं दृश्यते । तच्चाष्टमं दशमं च शतकमपहाय शतकेष्वन्येषु नियतमस्ति । अस्यां च प्रतिपाद्यभूतं वस्तु भक्तिमञ्जरीति समाख्ययैव स्पष्टमवगन्तुं शक्यते । भक्तेर्हि कविः प्रार्थनामुपक्रम्य, पुरुषार्थसाधनेषु तस्याः परममतिशयं प्रमाणयुक्त्युपाख्यानैः शतकचतुष्टयेन प्रदर्श्य, तां नवधा विभेजे——

'श्रुतिर्वरद! कीर्त्तनं स्मरणमङ्घ्रिसंसेवनं
रमावर! तथार्चनं त्वपिच वन्दनं दासता ।

त्वयैव सह सख्यमच्युत! निवेदनं चात्मन-
स्त्वयीति नवधा स्मृता भवति भक्तिरत्युत्तमा ॥'

(४. शत. १००, श्लो.)

इति। तासु च नवसु आद्याः पञ्च भक्तीः कविः पञ्चमादिनवमान्तेषु शतकेषु क्रमेण प्रपञ्च्य शेषाश्चतस्रो दशमशतके समुपश्लोकयन् भक्तेस्तथाविधायाः सम्प्रार्थनायां ग्रन्थमुपसञ्जहार।

सर्वं चैतत् प्रमेयजातं श्रीभागवतविष्णुपुराणादिभ्य उद्धृत्य सङ्ग्रहप्रपञ्चाभ्यामिह वर्णितम्। अस्यां च प्रसन्नसुकुमारप्रायाणि पदानि, अस्खलितप्रसरो वाक्यप्रवाहः, अयत्नोपनता अलङ्काराश्च सर्वतोऽभिष्यन्दिनो भक्तिरसस्यात्यन्तमनुगुणतां भजन्ते।

अस्याः कविः ९८८ कोलम्बाब्दे (१८१३ क्रैस्तवर्षे) मेषमासि स्वातिनक्षत्रे वञ्चिमहाराज्ञ्या **लक्ष्मीदेव्या** प्रसूतः। यदायं गर्भे स्थितः, तदैव राज्यस्वामिपुरुषान्तराभावाद् वाञ्चिराज्यस्वामित्वमस्योपनतमित्ययं '**गर्भश्रीमान्**' इति व्यवहृत आसीत्। द्वितीये वयसि मात्रा वियुक्तश्चायं मातृष्वस्रा **श्रीपार्वतीमहाराज्ञ्या** प्रतिनिधीभूय स्वराज्ये पाल्यमाने, तया स्वपित्रा च पर्पराजवंश्येन (चङ्ङनाशेरि) **श्रीराजराजवर्मदेवेन** चिन्त्यमानसकलयोगक्षेमः शुक्लचन्द्र इव वर्धमानः क्रमेण कलापूर्णो बभूव। कैरली, गैर्वाणी, आङ्गली, माहाराष्ट्री, आन्ध्री, कार्णाटी, द्रामिली, हिन्दुस्थानी इत्यासु भाषासु एष निपुण आसीत्। सङ्गीतसाहित्ययोश्चास्यासाधारणं पाण्डित्यमुपजातम्। सम्राट्पक्ष्याधिकारिणां, स्वमहामात्यीभविष्यतः स्वगुरोः **श्रीसुब्बरायस्य**, स्वगुरुजनस्य च संस्तवात् सहजप्रतिभोपस्कृताद् राज्यतन्त्रविज्ञानं सर्वातिशायि लेभे; षोडशे च वयसि स्वप्रतिनिधिसकाशाद् राज्यमङ्गीचकार। गाम्भीर्यं, धैर्यमौदार्यं, दयालुत्वम्, अप्रातिहतशासनत्वं धार्मिकत्वमित्यादयो महागुणाः शिशुभावेऽप्यस्याभिव्यक्ता आसन्। तानयं सिंहासनारूढो बहुविधविज्ञानराशिश्च सन् कियदिवाशोभयादिति वचनाद् वरमूहेनावगन्तुम्। अपदानं चास्य महानुभावतोचितमुच्चावचमद्यापि जानपदाः कथागोष्ठीषु वर्णयन्ति। अथायं वयसि चतुस्त्रिंशे स्वर्गमारुरोह। राज्यप्राप्तेश्च परतः साहित्यसङ्गीतयोर्बह्वीः कृतीरेष श्लाघनीयाः प्रणिनाय। विस्तीर्णा खल्वेषा भूमिराश्चर्यस्य— यदेष मेधावी जीवितकालेऽल्पीयसि बहुकलाभिज्ञो भूत्वा राज्ययोगक्षेमं सम्यक् चिन्तयन् बहुकाव्यकर्तृत्वख्यातेर्भाजनं बभूव। महाराजस्य कृतयश्च—

१. पद्मनाभशतकम्[1]
२. स्यानन्दूरपुरवर्णनप्रबन्धः.
३. अजामिलोपाख्यानम्.
४. कुचेलोपाख्यानम्.
५. सङ्गीतकीर्तनानि (संस्कृत आन्ध्रद्यादिभाषासु च)
६. उत्सववर्णनप्रबन्धः (संस्कृतकेरलभाषोभयरूपः)
७. भक्तिमञ्जरी.

इत्येता भवन्ति। आसु मन्ये भक्तिमञ्जरी कवेर्दिष्टन्तासन्नकाले निष्पन्ना। अत एव नूनमेनां प्रचारयितुमवसरो न लब्धः कविना। अन्याः पुनः कवेर्जीवितकालात् प्रभृति प्रचरन्ति। सङ्गीतकृतयो विदेशेष्वपि भक्तिपूर्वमाद्रियन्ते।

सेयं सम्प्रति मुद्रणेन प्रकाशिता भक्तिमञ्जरी न केवलं कवितापक्षपातात् कर्तृबहुमानाच्च, यावत् प्रतिपाद्यमाहात्म्यान्निकाममभिनन्दनमर्हति।

इति सविनयं निवेदयति

अनन्तशयनम्.
२९-६-१९०४.

त. गणपतिशास्त्री.

१. अस्य व्याख्यानं महामहिम्नः साम्प्रतिकमहाराजस्य पित्रा (चङ्ङनाशेरि) राजराजवर्मदेवेन विरचितमस्ति.

## शुद्धिपत्रम्.

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | १७ | वशं | वंश | ८५ | २१ | लामि | लानामि |
| २७ | १९ | मा | प्वा | १०१ | २३ | ४ | १ |
| ३५ | १४ | स्र | सृ | ,, | ,, | ५ | २ |
| ४६ | २२ | र्गस्ये | र्गे | १०३ | १७ | न | ना |
| ५२ | २ | मन्! च | मंश्च | ११२ | १४ | ३४ | ६४ |
| ५३ | २२ | इ | ई | ११३ | ,, | द्धुं | न्धुं |
| ५७ | २० | ळ | ळिँ | ११८ | २ | ढ | ठ |
| ७० | २१ | कुर | कुरु | १२४ | २१ | सनि | सीन |
| ७२ | १९ | क्षति | क्षिंति | १४९ | २२ | तं | त |
| ७६ | २१ | त्व | त | १५१ | ६ | याः | या |
| ,, | ,, | तार्यं | तीर्य | १५३ | १८ | न्यु | न्न्यु |
| ७८ | ६ | ५ | ६ | १६७ | १० | नः | नैः |
| ८१ | २ | स्त्वितीह | स्त्वर्याति | १८७ | २२ | धा स्वा | धाः स्वा |

७ शत. ८६ श्लो. 'द्विवर्णम्' इत्यस्य उपात्ते वाचके नेत्रशब्दरूपेऽक्षरद्वयशालीत्यर्थः. 'त्रिवर्णम्' इत्यस्य अक्षरत्रयवत शुक्लादिगुणत्रयवच्चेत्यर्थः.

॥ श्रीः ॥

श्रीगणेशाय नमः ।

स्वातिश्रीरामवर्मवञ्चिमहाराजप्रणीता

# भक्तिमञ्जरी ।

## प्रथमशतकम् ।

आनन्दामृतसारसन्ततिमयस्वाराज्यमूर्धाभिषि-
 क्तात्मन्नम्बुजनाभ! ते चरणयोर्नत्वा मुहुः सादरम् ।
एतावत् पुनरर्थये कुरु कृपामापत्सु सम्पत्सु वा
 भूयात् त्वत्पदपद्मयोरविरतं भक्तिर्ममाचञ्चला ॥ १ ॥

[2]यामाहुः श्रुतिशेखराध्वपथिकाः [3]पाराशराद्या दृढं
 त्वत्कारुण्यरसाप्तिसिद्ध[4]लतिकामव्याजमोदप्रदाम् ।
किञ्चाशेषसमीहितार्थघटनानैपुण्ययुक्तां नृणां
 तस्यै न स्पृहयेत को नु भुवने पापादृते श्रीपते! ॥ २ ॥

किञ्च त्वं च किरीटिने स्वसुहृदां मुख्याय युद्धाङ्गणे
 बन्धूनां निधनोत्थपातकभयोद्विग्नाय तत्सारथिः ।
श्रेयोमार्गशतेषु शंससि हि यद्यामेव मुख्यां दृढं
 तत् तामेव मम स्थिरीकुरु जवादम्भोजनाभाधुना ॥ ३ ॥

---

१. 'ते' इति तवेत्यस्यार्थेऽव्ययम्. यदि तु आत्मन्निति पृथक् पदं कृत्वा तदर्थः परमात्मा विशेष्यत्वेनाश्रियते, तदा 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (८-१-७३) इति विशेष्यवाचिपदस्यामन्त्रिताविद्यमानवद्भावप्रतिषेधात् षष्ठ्यन्तयुष्मच्छब्दस्यैवायमादेशः 'ते' इति. २. यत्पदेन पूर्वोक्ता भक्तिः परामृश्यते. ३. पराशरस्येमौ पाराशरौ व्यासशुकौ तदाद्याः. ४. सिद्धलतिका सिद्धौषधिः.

जात्या यास्त्वबला हरे! परमनाघ्रातात्मविद्यारसाः
स्वैरिण्यो रहिताः सतामघहृता सङ्गेन चानारतम् ।
गोप्यो [1]जारधियाप्यवाप्य ननु यां भक्तिं पदाम्भोरुहे
भावत्के तुतुषुर्भवेत् कथमियं नो तापहन्त्री नृणाम् ॥ ४ ॥

आस्तां तावदिदं सदा रिपुधियापि त्वां स्मरन्तः खला
भूपाश्चैद्यमुखाश्चराचरजगज्जालैकबन्धुं हरे! ।
त्वामापुर्बत तादृशे त्वयि हरौ लब्धा हि भक्तिः परा
कं नाज्ञानिनमप्यवाप्तकुशलं कुर्याद्विभो! मादृशम् ॥ ५ ॥

लक्ष्मीकान्त! [2]गुरुर्गुरुर्गुणनिधेर्यस्योद्धवस्य ध्रुवं
धर्मिष्ठावलिहारमध्यतरलो यो वा बुधैः कीर्तितः ।
सोऽप्येष त्वयि वीक्ष्य भक्तिमचलां गोपाङ्गनानामगाद्
विस्मेरत्वमिमां त्वदीयचरणे भक्तिं परां देहि मे ॥ ६ ॥

लीलामानुषविग्रहेण भवता संप्रेषिता देव! ये
गोपा हन्त निराकृता द्विजवरैरन्नार्थिनो यष्टृभिः ।
भूयस्तद्गृहिणीजनार्पितमदन् भक्तं च भक्तिं विलो-
[3]क्यादा मुक्तिमहो तदीयदयितव्रातोरुलज्जावहाम् ॥ ७ ॥

प्रह्लादोऽसुरवंशजः शिशुरपि त्वत्पादपङ्केरुहे
भक्तिं प्राप्य जहौ [4]गुरूक्तमशुभायैवेति जानन्नसौ ।

---

१. 'कामाद् द्वेषाद् भयात् स्नेहाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ गोप्यः कामाद्भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥' इति श्रीभागवतम्. २. बृहस्पतिः. ३. दत्तवान्. तद्गृहिणीजनायेति शेषः. ४. गुरुणा असुराचार्येण पित्रा वा उक्तमुपदिष्टम्.

लेभे नैव रुजां च तातकलितां त्वत्प्रेमपात्रेषु चा-
प्यासीद्यत् प्रथमो ममापि दिश तद् भक्तिं परां तादृशीम् ॥८॥

बाल्ये काममरुन्तुदैर्निगदितैर्मातुः सपत्न्या गृहाद्
यातो हन्त वनं स नारदमुनेर्लब्धत्वदाराधनः।
सर्वोत्कृष्टमवाप तद् ध्रुवपदं चौत्तानपादिर्यया
सा भक्तिस्तव पादयोः किमिव न श्रेयः समापादयेत् ॥ ९ ॥

भास्वद्वंशपयोधिपार्विकविधौ नाभागसूनौ कृतः
शापोऽभून्ननु मोघ एव मुनिना क्रुद्धेन दुर्वाससा।
भूयस्त्वं शरणार्थिनेऽपि मुनये चक्रायुधोपद्रुता-
यारादाशु शशंसिथास्य नृपतेरेवेह संप्रीणनम् ॥ १० ॥

एवं त्वत्पदपद्मयोरनुदिनं न्यस्तात्मनामात्मनो-
ऽप्युत्कर्षं ननु वाञ्छसि त्वमधिकं यत् सिन्धुकन्यापते!।
तत् कारुण्यसुधाम्बुधौ त्वयि परे सत्त्वैकसान्द्रे स्थिरां
भक्तिं भक्तजनप्रियाद्य वितर श्रीपद्मनाभ! प्रभो! ॥ ११ ॥

सन्त्येवात्र बहूनि कैटभरिपो! वर्त्मान्यहो देहिनां
संसारानलकीलतापशमने दक्षाणि निस्संशयम्।
तान्येतानि समीक्षितान्यपि यथा भक्तौ तथा तेषु चेत्
सौकर्यं सहसा जगत्त्रयपते! तान्येव गृह्णीमहे ॥ १२ ॥

योगः कर्म तपः समाधिरनिशं गङ्गादितीर्थाटनं
दानं वात्र हरे! व्रतान्यपि तथा चान्द्रायणादीन्यहो।

---

१. वचनैः. २. ध्रुवः. ३ अम्बरीषनामके राज्ञि. ४. शरणत्वेन कथितवान्. ५. समीक्षितान्यपि सम्यग्गुरुलघुभावं प्रति पर्यालोचितानि चेत्यर्थः. ६. यथेत्यादिवाक्यस्य किन्त्वित्यादिर्बोध्यः. सौकर्याभावात् तानि न गृह्णीम इति तद्वाक्यतात्पर्यम्.

सर्वोत्कृष्टतमान्यपि त्वसुकरत्वं नाम वच्म्यादरा-
देतेष्वेकश एकमेकमधुना यावन्मति श्रीपते! ॥ १३ ॥

लक्ष्मीकान्त! मुमुक्षवोऽथ कतिचित् त्वष्टाङ्गयोगाध्वना
त्वामेवात्र भजन्ति तार[1]मनुचिन्त्यान्तः परं निर्मलम् ।
प्राणानप्यभियम्य हन्त विषयादाहृत्य सर्वेन्द्रिया-
ण्युत्क्षिप्याथ सुषुम्णया[2] ननु षडाधारै[3]स्तथा मारुतम् ॥ १४ ॥

मार्गोऽसौ सुतरामनिन्दिततरोऽप्याप्त्यै तवास्मिन् कलौ
नेता तादृशवर्त्मनि प्रथमतः प्रायो गुरुर्दुर्लभः ।
लब्धे[4]ऽप्येवमनुष्ठितौ हि कुशला न स्युर्नरा यत् ततः
सर्वेषां सुकरत्वमत्र भगवन्! पश्यामि नो वर्त्मनि ॥ १५ ॥

केचित् कर्मणि निष्ठिताः शुभतमे वेदोदिते साधवः
स्वर्गाप्त्यै क्रतुभिर्यजन्ति विविधैस्त्वामेव यज्ञेश्वरम् ।
स्वाहाकारसमुज्ज्वलैश्चरुपुरोडाशाग्रविश्राणित-
प्राज्याज्याप्तहविस्सुतृप्तविकसत्सेन्द्रामरास्याम्बुजैः ॥ १६ ॥

लोकोत्कृष्टतमान्यमून्यपि विभो! कर्माण्यमीषां पर-
न्त्वाचार्यः पुनर्ऋत्विजो[5]ऽभिजनता द्रव्यं तथापेक्षितम् ।
लुप्ते कर्मणि किञ्चिदाशु भविता कर्तुश्च दोषो महां-
स्तस्मात् सर्वजनीनतां न दधते कर्माण्यमूनि ध्रुवम् ॥ १७ ॥

एके सद्गुरुभाषिताञ्जनलसद्विज्ञानदृष्ट्या जगद्
मिथ्यारूपमवेक्ष्य चात्र सहसा सर्वार्थसन्त्यागिनः ।

---

१. संसारतारकं प्रणवरूपं वा. २. नाडीविशेषेण. ३. नाभिः, हृदयम्, उरः, तालुमूलं, भ्रूमध्यं, मूर्धा इत्येते षडाधाराः. ४. अर्थाद् गुराविति विशेष्यस्य लाभः. ५. इदमाचार्यादिष्वन्वेति. 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (१–२–६९) इत्येकशेष एकवत्त्वं च.

धन्याः पर्वतगह्वरेषु सततं कालं नयन्तो विभुं
त्वामेवेह भजन्ति निस्पृहधियो वाय्वम्बुपर्णाशनाः ॥ १८ ॥

मायामोहितचेतसामिह कलौ लक्ष्मीपते! प्राणिनां
नित्यं वित्तकळत्रपुत्रविषयेष्वत्यन्तसक्तात्मनाम् ।
आस्थास्मिन् पथि भो निकाममयुते स्याद्वा न वा कस्यचित्
सर्वेषां न विलोकयामि हि ततः सौकर्यमत्राध्वनि ॥ १९ ॥

धत्ते यत्स्मृतिरप्यघौघतिमिरे लीलां परां भास्वतो
यामद्यापि बिभर्ति सादरमुमानाथः स्वयं मौलिना ।
तस्मिन् जह्नुसुताम्भसीह सकृदप्यामज्जतां देहिनां
पुण्यं वक्तुमहीश्वरोऽपि बिभृयात् किं देव! पर्याप्तताम् ॥ २० ॥

क्लान्तिं निस्तुलितां शरीरमनसोर्देशाटनप्रापितां[1]
क्षुत्तृट्तापमपारमन्नसलिलादीनामभावात् क्वचित् ।
सोढुं शक्तिमतैव साध्यममलं पुण्यं तदेतत् ततः
सौकर्यं सकलस्य नैव कलये कर्मण्यमुष्मिन्नपि ॥ २१ ॥

दारिद्र्यातपजन्यतापततिहृद्वित्तस्वरूपातप-
त्राभावेन सुदुस्सहेन नितरां विप्राय संसीदते ।
तत्तापोद्यदपारतृट्प्रशमनासक्ता अनूनानि ये
दानानि प्रतिपादयन्ति सजलं ते पुण्यवन्तो दृढम्[2] ॥ २२ ॥

गोभूवस्त्रहिरण्यहस्तितुरगादीनि प्रभो! भूतले
दातुः पातकखण्डनानि बहुशो दानानि सन्ति ध्रुवम् ।
अप्येवं[3] धनशालिनैव भुवने साध्यान्यथैतानि यत्
सौकर्यं सकलस्य नैव कलयाम्यत्रापि मार्गे ततः ॥ २३ ॥

१. तीर्थयात्रारूपे. २. असंशयम्. ३. एवमपि,

मुच्यन्ते खलु रौरवादिनरकेभ्यो हि ध्रुवं पापिनो-
ऽप्यारादाचरणेन गर्हिततमा यस्योच्चकैरच्युत! ।
तस्याथो व्रतसञ्चयस्य महिमा चान्द्रायणाद्यस्य वै
जायेताम्बुजवासिनीधव! विभो! वाग्गोचरः कस्य वा ॥२४॥

एवं सत्यपि मार्ग एष विमलो मर्त्यैरिहास्मादृशै-
र्वाचैवालमुपासितुं हि सुलभो नो कर्मणा जातुचित् ।
तस्मान्नो कलयामि विश्वजनतासौकर्यमत्राप्यहो
मार्गे हन्त महीयसा हि वपुषः खेदेन लभ्ये प्रभो! ॥ २५ ॥

त्वद्भक्तिस्तु तवावतारचरिताद्याकर्णनेन स्वयं
प्राप्या खेदलवं विनैव विमलज्ञानामृतापादिनी ।
स्यानन्दूरपते! जयत्यहह या सैवाचिरात् त्वत्पद-
द्वन्द्वाम्भोरुहयोश्चकास्तु हृदये प्रेमार्द्रिता मामके ॥ २६ ॥

पूर्वोक्तान्यपि च व्रतादिममहाकर्माण्यहो देहिनां
पापान्येव लुनन्ति नो चिरतरां शौरे! दृढां वासनाम् ।
त्वद्भक्तिः खलु तद्द्वयीमपि हरत्यानन्दमूर्त्ते! यत-
स्तस्मात् सैव सदा स्थिरा मम भवत्वित्यर्थना मामिका ॥२७॥

यस्मान्मानससारसान्तरुदिते भक्तिप्रकर्षे नरः
पुण्यैरच्युत! कोटिजन्मरचितैः कारुण्यलब्धैस्तव ।
आनन्दस्फुटहर्षबाष्पपुळकी सर्वाधिको जृम्भते
तस्माद् भक्तिरसात् परं सुमधुरं नो वस्तु जानाम्यहम् ॥२८॥

---

१. दूरात्. इदं च मोचनक्रियायामन्वेति. २. इदं मोचनक्रियायां करणम्. ३. पापवासनाम्. ४. पापं तत्प्रयोजकवासना चेत्येतद् द्वयम्.

सद्यः क्षालितपापकर्दमकुलास्त्वद्भक्तिरूपामृत-
स्रोतश्शीतळधारयानवरतं त्वय्येव रक्ताशयाः ।
निर्द्वन्द्वा[1] विषयेषु निस्स्पृहधियो ये साधवः सञ्चर-
न्त्येतान् धन्यतमानवाप्तकुशलान् विश्वेश! मन्यामहे ॥ २९ ॥

येषामाननिस्सृतं खलु जगत्कर्णामृतं तावकं
नामानन्तपुरेश! सान्द्रसुखदं तापत्रयोन्मूलनम् ।
तैः साकं मम सङ्गमोऽस्त्वविरतं भक्तोत्तमैस्तावकै-
रज्ञानामिह मादृशामपि नृणां सन्मार्गसन्दर्शिभिः ॥ ३० ॥

त्वय्येवार्पितचेतसः खलु दृढं सर्वात्मना ये जना-
स्त्वद्गाथामृतसिद्धभेषजविधूताशेषपापामयाः ।
जात्या वा ननु कर्मणाथ भुवने ते गर्हिता अप्यहो
नूनं मे गुरवस्त्वमी इति दृढा भूयान्मदीया मतिः ॥ ३१ ॥

अम्भोदेष्विह चातकावलिरिव प्रोत्फुल्लपद्माकरे
हंसानां निकरो यथा हिमकरे यद्वच्चकोरव्रजः ।
माकन्देषु मधौ यथा पिकततिः पुष्पेषु भृङ्गो यथा
स्वामिन्! मामकमानसं विहरतां त्वय्येव नित्यं हरे! ॥ ३२ ॥

भुञ्जानस्य सरोजनाभ! पिबतः स्नानैषिणः खादतो
निद्रालोरटतो वयस्यनिकरैः सम्भाषमाणस्य वा ।
अध्यासो[2] हृदि मे सदा विलसतु श्रीपद्मनाभात्मको
यो वा वाग्विषयेतरामितसुखं सूते क्षणात् प्राणिनाम् ॥ ३३ ॥

---

१. द्वन्द्वं सुखदुःखादिरूपं, तस्मान्निष्क्रान्ताः. २. भगवदभिन्नोऽहमिति ज्ञानम्.

जायन्ते ननु जन्तवोऽत्र बहवो ब्रह्माण्डभाण्डोदरे
जीवन्त्यप्युदरैकपोषणरताः स्तोकान्यहानि ध्रुवम् ।
क्षीयन्ते सहसा पुनर्जनिमृतिप्रोत्तुङ्गभङ्गाकुले
संसाराम्बुनिधौ पतन्ति च भवद्भक्तिप्लवाभावतः ॥ ३४ ॥

कामक्रोधमुखैस्तिमिङ्गिलकुलैर्घोरैरलं दुस्तर-
स्त्वद्भक्त्यैव भवाम्बुधिः सुगहनः सोऽयं तरीतुं क्षमः ।
सा भक्तिस्तु गुरूपदेशजनिताज्जन्या विवेकोदयात्
स[1] स्यान्मानुषजन्मनीश्वर! यतः श्लाघ्यं तदेव[2] ध्रुवम् ॥ ३५ ॥

आसाद्यापि रमेश! दुर्लभतरं जन्मैतदत्युत्तमं
त्वत्सेवामयभूरिभाग्यसुखदे लब्ध्वा च वंशे जनिम् ।
यो वा हन्त यतेत नैव मनुजः कारुण्यलाभाय ते
धिग्धिग् जन्म च तस्य कूपकुहरे मग्नस्य यद्वत् पशोः ॥३६॥

लोके वर्षशतं नृणां परिमितं लक्ष्मीपते! जीवितं
तस्यार्धं भगवन्! निशात्मकतया यात्येव निस्संशयम् ।
शेषार्धं विनियुज्यते धनसुतागारादिके येन वा
त्वत्पादस्मरणं विनैव भुवने कोऽन्योऽत्र गर्ह्यस्ततः ॥ ३७ ॥

सन्त्येके भुवनैकनाथ! विषयासक्ता मनुष्याधमा
ये स्वप्नेऽपि भवत्कथामृतकणास्वादं न जानन्त्यहो ।
प्राप्यापि स्वयमश्रमेण भगवन्! जन्मान्ववाये वरे
नूनं ह्यात्महनस्त्वमी मधुरिपो! सद्भिर्विनिन्द्या[3] यतः ॥ ३८ ॥

१. विवेकोदयः. २. मानुषजन्मैव. ३. निन्दाया वधपर्यायत्वादात्मघातित्वमभक्तानां युक्तमिति भावः.

आयुर्नीररुहच्छदोपरिलसत्पानीयलोलं तद-
ष्याधिव्याधिकुलैः सुदुस्सहतरैः प्रायेण दुःखप्रदम् ।
लब्ध्वा त्वां न भजेत यो गतिरहो का स्यादिहास्याम्बुधौ
वातोद्भूतविकर्णधारतरणेर्लीलामलं बिभ्रतः ॥ ३९ ॥

मन्यन्ते सुदृढं स्वधर्म इति ये हा हन्त वित्तार्जनं
योषित्सङ्गिजनैश्च सङ्गतिरहो सर्वार्थदात्रीति च ।
पैशुन्यं परपीडनं ननु परा विद्येति मर्त्याधमा-
स्तेषां का गतिरन्ततोऽथ कुधियां नैवावगच्छाम्यहम् ॥ ४० ॥

वर्तन्ते भुवि निष्क्रयाः सुबहुशो वेदोदिताः पाप्मनां
घोराणामपि भक्तवत्सल! हरे! गङ्गावगाहादिकाः ।
लब्ध्वा मानुषजन्म सर्वसुखदं यो वा न संसेवते
पादाम्भोजयुगं त्वदीयममलं का वास्य वै निष्कृतिः ॥ ४१ ॥

दैत्यारे! भवदीयमन्दिरवरोपान्ते वसन्तोऽप्यहो
केचिज्जातुचिदालये तव पदन्यासं च नो कुर्वते ।
अन्तः श्रीहरिपादपद्मयुगलं नो ध्यायतां ज्ञानिनां
किं देवालययात्रयेति वचसा संमोहयन्तो जडान् ॥ ४२ ॥

गाथायाः श्रवणे तवेह कुहचिद्धन्यैः प्रसक्ते जनै-
स्त्वल्लीलामकरन्दपानविषये मत्तद्विरेफायितैः ।
सद्यः केचन लौकिकोक्तिकथनान्येवारभन्ते जना
मूढा हन्त कुतूहलेन महता सार्धं स्वतुल्यैः खलैः ॥ ४३ ॥

---

१. प्रायश्चित्तानि. २. त्वदसेवापातकस्य प्रायश्चित्तं नास्तीति भावः.
३. अयमवधारणे.

गायन्तं भवदीयदिव्यचरितान्युच्चैर्विलज्जं तथा
　　नृत्यन्तं गलिताश्रुगद्गदगिरं भक्तोत्तमं तावकम् ।
लोके हन्त हसन्ति केचन खलाः सद्यो ब्रुवन्तो मिथः
　　प्रोन्मत्तं त्ववलोकयैनमवशं निर्लज्जमित्यञ्जसा ॥ ४४ ॥

यो नामानि जपत्यनन्त! भवतोऽसौ जल्पको गण्यते
　　यो मौनी तव पादचिन्तनरतः सोऽयं जडात्मेति च ।
मूर्खैर्यन्न तदीश! चित्रमवनौ घोरामयैः पीडिता
　　अध्यस्यन्ति हि तिक्ततां सुमधुरेष्वप्युच्चकैर्वस्तुषु ॥ ४५ ॥

दृष्टे तावकपादपद्मयुगलासक्ते विरक्ते जने
　　सर्वैः पूज्यतमे जना हि कतिचित् तद्धेलनं[1] कुर्वते ।
दौष्ट्योपार्जितवित्तसम्भवमदस्तब्धाशयानां पुरः
　　कुर्वन्त्यञ्जलिमादरेण च पुनर्हा हन्त मोहान्धता ॥ ४६ ॥

लोके कर्मसु निर्मलेष्वलमनुष्ठेयं हि मौनव्रतं
　　त्वन्नामाक्षरकीर्तनैकविषये कुर्वन्ति नाम[2] ध्रुवम् ।
चित्ते चोपरतिं[3] समस्तविषयात् प्राप्यां विहायाश्रिमां
　　त्वत्पादस्मरणाद् रमावर! वहन्त्येके मनुष्याधमाः ॥ ४७ ॥

सर्वज्ञोऽस्मि महत्तमे ननु कुले जातोऽस्मि तुल्यो मया
　　को वास्मिन् जगतीति[4] देव! कुधियः केचिन्मदान्धाशयाः ।
वित्तस्यैव हि लिप्सया बहुविधैर्यज्ञैर्यजन्तो मुधा
　　त्वां विस्मृत्य पतन्ति हन्त विवशा अन्धे तमस्याविले ॥ ४८ ॥

---

१. तस्य हेलनमनादरम्.　२. नामेति प्राकाश्ये.　३. निवृत्तिम्.
४. मन्यमाना इति शेषः.

अत्युत्कृष्टकुलोद्भवोऽस्तु नितरां विज्ञातषड्दर्शनो[1]
विश्वैर्मान्यतमे स्थितोऽस्तु महति स्थाने च किं तावता ।
यस्यान्तः समुदेति नैव भगवन्! भक्तिस्त्वयि श्रीपते!
पूर्वोक्तोऽस्य गुणव्रजः खलु वृथा यद्वद्धुतं भस्मनि ॥ ४९ ॥

शास्त्राभ्याससमार्जितः सुविमलो बोधोदयो देहिभिः
कर्माण्याचरितान्यपीह भुवने यत्साधनान्येव[2] हि ।
तामप्राप्य रमेश! भक्तिममलां तेष्वेव रज्यन्ति ये
नूनं यान्ति सदृक्षतामहह ते व्यर्थं तुषाघातिभिः ॥ ५० ॥

अम्भोजाक्ष! नरस्य यस्य पिबतः कर्णौ जगन्मङ्गलं
त्वद्गाथामृतमत्र नैव भुवने तौ गर्ततुल्यौ ध्रुवम् ।
जिह्वा यस्य च नो जपत्यविरतं रम्याणि नामानि ते
मण्डूक्येव हि सा वृथा प्रलपति प्राप्तौ परं प्रावृषः ॥ ५१ ॥

मौलिर्यस्य च पादपद्मयुगले कुर्यात् प्रणामं न ते
लक्ष्मीकोमलपाणियुग्ममृदिते निर्व्याजहर्षाकुलम् ।
उन्नम्रद्युतिरत्नदीप्रमकुटेनाप्याञ्चितं तं वृथा
भारं तावदवैमि नूनमवनेः श्रीपद्मनाभ! प्रभो! ॥ ५२ ॥

सन्तप्तोत्तमहेमकङ्कणवरेणालङ्कृतावप्यहो
यौ बाहू जलजाक्ष! नैव कुरुतः प्रेम्णा सपर्यां तव ।
तौ मन्ये विपिने भयानकतमैः शार्दूलमुख्यैर्मृगै-
र्जुष्टे रिक्तजने समुच्छ्रिततरोः शाखोपमावित्यहम् ॥ ५३ ॥

---

१. विज्ञातानि षड् दर्शनानि न्यायवैशेषिकसाङ्ख्ययोगमीमांसावेदान्तात्मकानि येन सः. २. बोधोदयः कर्माणि च यस्या भक्तेः साधनान्येव भवन्ति, न तु स्वातन्त्र्येण पुरुषार्थं साधयितुं क्षमाणि भवन्तीति तात्पर्यम्.

नेत्रे यस्य न पश्यतः सकुतुकं दिव्यानि रूपाणि ते
विश्वानन्दकराणि दानवरिपो! पिञ्छायिते[1] ते ध्रुवम् ।
पादौ यस्य च मन्दिरं न भजतः शौरे! मुहुस्तावकं
नूनं हन्त महीरुहां वनभुवां तौ जन्मभाजौ हरे! ॥ ५४ ॥

यत्सङ्गात् समवाप जह्नुतनया सर्वाघविध्वंसने
वैदग्ध्यं मुनिमानसाब्जनिलये ये राजहंसायिते ।
सम्पर्कान्नु[2] तयोस्त्वदीयपदयोः स्फीतं तुलस्याः परं
सौरभ्यं न हि वेद योऽत्र मनुजो जीवन्मृतोऽसौ[3] दृढम् ॥ ५५ ॥

स्यानन्दूरपुरेश! साधु कलितैस्त्वन्नामधेयाक्षरै-
र्विश्वेषां श्रवणद्वयीपुटसुधाधाराभिषेकप्रदैः ।
नो वा विक्रियते मुखं न कुतुकं नानन्दबाष्पो दृशोः
सर्वाङ्गे पुलकश्च यस्य न मनस्तस्याश्मतुल्यं ध्रुवम् ॥ ५६ ॥

रम्यापि ध्वनिमण्डितापि यमकप्रासोज्ज्वलापि प्रभो!
प्रौढार्थाप्यनवद्यगद्यगणयुक्पद्यान्वितापि ध्रुवम् ।
श्रीजाने! यदि साहिती तव गुणालापैरलं वर्जिता
धिक् तां मोघतमां वृथाप्रलपितप्रायामिहाधोक्षज! ॥ ५७ ॥

निर्दोषेण सतां मतेन विधिना सम्यक्कृयानुष्ठितं
वैकल्यं च विना विरोधफलदं मन्त्रस्य तन्त्रस्य वा ।
अन्यूनोत्तमदक्षिणं च सुमहत् कर्मापि नो चेदहो
लक्ष्मीनाथ! भवत्परं विफलतामेवाप्नुयात् तद् ध्रुवम् ॥५८॥

---

१. बर्हस्थितनेत्रकवन्निष्फले इत्यर्थः. २. नुशब्द उत्प्रेक्षायाम्. अब्जाधिवासितपदसम्पर्को हि तुलस्याः सौरभसमृद्धौ हेतुः सम्भाव्यते. ३. अनेन व्यर्थघ्राणेन्द्रियत्वं प्रतिपाद्यते.

देशे यत्र वसन्ति नैव भगवंस्त्वत्पादभक्ता जना
यत्राहो न गृहे गृहे सकुतुकं प्रस्तूयते ते कथा।
कल्प्यन्ते न च यत्र तावकमुदे सर्वोत्तमाश्चोत्सवा
देशोऽयं त्रिदिवोपमोऽपि सहसा त्याज्यो नरैः साधुभिः ॥५९॥

यस्मिन्नीश! दिने क्षणार्धमपि वा नास्वाद्यते सादरं
त्वद्गाथामयनिर्भरामृतझरी संसारतापापहा ।
तन्मन्ये बत दुर्दिनं भुवि नृणां भोगीन्द्रशायिन्! मुधा
मेघच्छन्नदिनस्य दुर्दिनमिति ख्यातिर्बुधैः कल्पिता ॥ ६० ॥

अन्नं स्वाद्वपि षड्रसोज्ज्वलतरैः पीयूषसंस्पर्धिभि-
र्युक्तं वाप्युपदंशकैश्च विविधैः श्रद्धावितीर्णं च वा ।
भक्त्या चेत् तदनर्पितं हि भवते निश्शेषविश्वात्मने
चण्डालालयकूपतोयवदपि[1] त्याज्यं बुभुक्षान्वितैः ॥ ६१ ॥

लोकान् वानुपपीड्य[2] हन्त विवशान् न्यायेन चैवार्जितं
पात्रापात्रविवेकसंयुततया देदीय्यमानं[3] च वा ।
द्रव्यं स्याद् यदि नार्पितं ननु यथाशक्तीह तुभ्यं मुदा
नूनं तत् तु कपालसंस्थजलवत् त्याज्यं परं साधुभिः ॥ ६२ ॥

संफुल्लोत्पलपद्मगर्भविलसत्किञ्जल्कसंवासितं
संयुक्तं त्रिगुणात्मकेन[4] सलिलेनाध्वन्यखेदावहम् ।
रम्यं चापि सरः स्वपादरजसा विश्वं पुनानैर्न चे-
ज्जुष्टं भागवतैस्तु वायससरःप्रायं[5] विदुस्तद् बुधाः ॥ ६३ ॥

---

१. अपिर्भिन्नक्रमः. बुभुक्षान्वितैरपीति योज्यम्. २. अपीडयित्वा. ३. अतिशयेन दीयमानम्. ४. शैत्यलघुत्वमाधुर्यरूपगुणत्रयवतेत्यर्थः. ५. क्षुद्रकासारतुल्यमित्यर्थः.

तन्त्रीनादविमिश्रितं लययुतं तारस्वनात्युज्ज्वलं
श्रोत्रानन्दकरं चरिष्णुभिरलं [1]ग्रामत्रयेऽपि स्वरैः ।
गीतं तावकनामनिर्भरसुधाजुष्टं न चेत् तत् पुन-
[2]र्व्यर्थं व्यर्थमरण्यरोदनमिव प्रायो रमावल्लभ! ॥ ६४ ॥

दाता चाश्रितवत्सलश्च सदयः सत्यक्षमामण्डितो
ज्ञाता धीरगुणो जितेन्द्रियगणो गम्भीरचेतास्तथा ।
त्राता चाप्यनुजीविनोऽथ निखिलादापत्समूहात् प्रभुः
पाता त्वच्चरितामृतस्य न यदि त्याज्यो दृढं सज्जनैः ॥ ६५ ॥

दानाम्भस्स्रवसिक्तगण्डविलसन्मातङ्गषण्डं पुन-
र्व्यावल्गत्पवमानवेगतुरगान् सौधांस्तथाभ्रङ्कषान् ।
बिभ्राणोऽप्यथ सम्पदं च भुवने सङ्ख्यातिगां मानव-
स्त्वद्भक्त्या रहितो यदीह स दृढं गर्ह्योऽतिनिःस्वादपि ॥ ६६ ॥

स्यानन्दूरपते! [3]व्ययेन महता तन्तन्यमाना भृशं
वादित्रारवगीतनर्तनमुखैरानन्दसन्दायिनः ।
विश्वोत्कृष्टमहोत्सवा अपि कृतास्त्वत्प्रीतये नो यदि
भ्राजन्ते न हि चन्द्रिकेव वितता शून्ये महाकानने ॥ ६७ ॥

सर्वज्ञस्य गुरोरपीह वचनं त्वद्भक्तिलाभाय नो
हेतुः स्याद् यदि हेयमेव तृणवत् तत् सारमप्यञ्जसा ।
बालेनापि यदुक्तमेतदिह चेत् त्वद्भक्ततासाधकं
तद् वेदोदितवद् रमेश! समुपादेयं मुहुः श्रद्धया ॥ ६८ ॥

---

१. ग्रामाणां स्वरसन्दोहानां त्रये "षड्जग्रामो भवेदादौ मध्यमग्राम एव च । गान्धारग्राम इत्येतद् ग्रामत्रयमुदाहृतम् ॥" इत्युक्तरूपे. २. उद्वेगाद् द्विरुक्तिः. ३. धनत्यागेन.

नैवेयं जननी न चैष जनको न स्यादयं सद्गुरु-
नैतन्मित्रमिदं न शास्त्रममलं न स्यादयं च प्रभुः ।
यां[1] संसारमहाम्बुराशितरणस्योपायभूतां हरे!
भक्तिं प्रापयितुं त्वयीह बिभृयान्नैवेश! निष्णाततताम्[2] ॥ ६९ ॥

उत्पत्तिप्रमुखा[3] मुकुन्द! सदृशाः[4] षड् भावभेदा नृणां
स्थास्नूनामिह भूरुहां खगमृगादीनामपि प्राणिनाम् ।
भक्त्यैव ध्रुवमेकयात्र पुरुषस्तेभ्यो वरीयान्[5] स्मृत-
स्तस्याः प्राप्तिमृते स्थितस्य पुरुषस्यैषां च भेदो हि कः ॥ ७० ॥

वाचा किं बहुनात्र यद्यदवनौ दत्तं तथेष्टं हुतं
कर्मानुष्ठितमुत्तमं सुमहता क्लेशेन तप्तं तपः ।
तत्तत् त्वन्निरतेन हन्त मनसा नो चेदिहानुष्ठितं
श्रीजाने! समवाप्नुयाद् विफलतामेवेति निस्संशयम् ॥ ७१ ॥

तस्मान्नूनमनन्तपुण्यनिवहैर्जन्मोत्तमं मानवं
प्राप्तेनेह शरीरिणान्यविषयानासक्तचित्तं[6] भृशम् ।
साध्या यत् त्वयि भक्तिरेव सततं सर्वात्मना सर्वथा
तत् तामेव दिश त्वदेकशरणस्याम्भोजनाभाद्य मे ॥ ७२ ॥

सा भक्तिर्यदि पद्मनाभ! पदयोः शौरे! तवासादिता
सद्यस्तद्वशगो भवान् स्ववशगब्रह्माण्डभाण्डोऽप्यहो ।
अन्तःप्रोद्यदपारदिव्यकरुणापूरो हि तेषां नृणां
किं किं वाञ्छितमाशु न प्रदिशति स्वीयाङ्घ्रिसंसेविनाम् ॥

---

१. यत्पदस्य यथायोगं लिङ्गविपरिणामो बोध्यः. २ कुशलताम्. ३. उत्पत्तिसत्तावृद्धिपरिणामापक्षयनाशाः. ४. साधारणाः. ५. अतिशयेन उरुर्महान्. ६. इदं साधनक्रियाविशेषणम्.

लोके दुस्सहशीतवाततपनक्लेशांस्तृणीकृत्य ते
कारुण्यामृतलिप्सयैव चरतोः पूर्वं किलोग्रं तपः ।
भक्तिं वीक्ष्य हरे! प्रसन्नहृदयो यद्[१] देवकीशूर[२]योः
पुत्रत्वं गतवान् स्वयं त्रिजगतां कर्तुश्च कर्ता भवान् ॥७४॥

अङ्के त्वामधिरोप्य मूर्ध्नि च समाघ्रायाच्युतानुक्षणं
स्वाङ्गुल्यग्रतलेन हन्त चिबुके तौ[३] स्पृष्टवन्तौ यदा ।
तावत् कोमळसृक्कयुग्मविगलद्दोक्षीरबिन्द्वन्वितं
दृष्ट्वा ते हसितं भृशं जहृषतुः कोऽन्यो हि धन्यस्त[४]तः ॥७५॥

मय्येवार्पितदृष्टिरेष पृथुको मन्दं हसत्यादरा-
दित्येवं सविवादयोः किल मिथः पित्रोस्तवानुक्षणम् ।
भाग्यं वर्णयितुं बताद्यमकृतां लोके कवीनामति-
प्रौढानामपि पद्मनाभ! शिथिलायन्ते न केषां गिरः ॥७६॥

लालास्यन्दिमुखारविन्दविगलद् व्यक्तेतरं भाषितं
पायम्पायमतीव कर्णयुगलेनाम्बेति तातेति ते ।
रोमाञ्चोदयहर्षबाष्पसहितस्ता[५]भ्यामवाप्तो हि यः
स्वा[६]नन्दस्तमिहाप्नुयात् किमु नरो लोकाधिपत्येऽपि वा ॥७७॥

शौरे! प्राक्तन एव जन्मनि दृढं त्वत्पादसंसेवया
संप्राप्तत्वदुपान्तसेवनमहाभाग्योदयानां हरे! ।
गोपीनां च त[७]था निकाममकरोः कं कं प्रसादं न वा
लोके यत् सुमहीयसापि तपसा हन्तानवाप्यं जनैः ॥ ७८ ॥

---

१. यस्मादित्यर्थः. तस्मादिति च पूर्वपद्ये गम्यम्. २. शूरेति वसुदेवपरम्. ३. देवकीवसुदेवौ. ४. देवकीवसुदेवाभ्याम्. ५. पितृभ्याम्. ६. आत्मानन्दः. ७. यथा पित्रोस्तथा.

नृत्यन् पल्लवकोमलेन चरणेनासां पुरो मञ्जुलं
गायन् वेणुरवेण किञ्च नवनीताप्त्यै तदङ्के लगन् ।
तद्गेहस्थितशिक्यसंस्थितपयश्चौर्येषु तासां पुनः
श्रुत्वा कोपवचांसि मोदमगमः स्तोत्रे यथा [1]सात्वताम् ॥ ७९ ॥

कालिन्दीपुलिने रमेश! दिवसम्मन्यास्वहो यामिनी-
ष्वेकैकत्र तुषारदीधितिरुचा ताभिः प्रवृत्तो मुदा ।
कर्तुं रासरतोत्सवं परमदाः कं कं प्रमोदं न वा
[2]तासां यस्तु बभूव केशव! सुरर्षीणामपीर्ष्यास्पदम् ॥ ८० ॥

[3]तस्मादेव मुहुर्मुहुः सविनयं कारुण्यवारान्निधिं
त्वां सर्वज्ञमपीह मन्दधिषणः सोऽहं त्वदेकाश्रयः ।
याचे त्वत्पदभक्तिमेव सततं सर्वार्थदां सस्पृहं
तत्प्राप्तौ न विलम्बलेशमपि हा सोढुं समर्थोऽस्म्यहम् ॥ ८१ ॥

सा भक्तिश्च मता द्विधा बुधजनैस्त्वत्तत्त्वसन्दर्शिभि-
स्तत्रैका तु सकामभक्तिरपरा निष्कामभक्तिः स्मृता ।
त्रैलोक्येश! तयोर्वृणे परमहं निष्कामभक्तिं दृढं
तच्छ्रैष्ठ्यावगमेन हेतुभिरितः संवक्ष्यमाणैः परम् ॥ ८२ ॥

सेवां प्राप्य तवाङ्घ्रिपङ्कजयुगस्यैके जनाः सस्पृहं
याचन्ते भुवि [4]कामितं [5]हलहल क्षुद्रं सुखाभासदम् ।

---

१. भागवतानाम्. २. सम्बन्धसामान्ये षष्ठी. ताभ्य इत्यर्थः. ३. भक्तेर्महाफलत्वादेव. ४. अभीष्टवस्तु. ५. हलहलेति रलयोरभेदात् कष्टे द्विरुक्तिर्हरशब्दस्य, यथा 'शिव शिव' इति शिवशब्दस्य. स्मर्यते च कष्टाश्चर्यादौ भगवन्नाम. तथा च पाद्मपुराणम् 'आश्चर्येऽपि भये शोके क्षुधिते नाम वा मम । व्याजेन वा स्मरेद्यस्तु मम सायुज्यमाप्नुयाद् ॥' इति. एतत्कविनान्यत्राप्ययं शब्दः प्रयुक्तः, यथा 'हरासि मुधा किमु हलहल कालम्' इति.

लब्ध्वा कल्पतरुं समस्तफलदं मर्त्यो यथा याचते
स्तोकं वस्तु दरिद्रभोग्यमवमं भाग्येन हीनो भृशम् ॥ ८३ ॥

पादाम्भोजयुगं स्वकीयमनिशं सर्वात्मनाभ्यर्चतां
मर्त्यानां सकलार्थदं दृढममी त्वामर्थयन्ते तु यत् ।
भोगान् क्षुद्रतमान् जगत्त्रयपते! नैतद्विचित्रं घटो
गृह्णाति ध्रुवमल्पमेव सलिलं पूर्णेऽपि रत्नाकरे ॥ ८४ ॥

राष्ट्रे हस्तगते धनेऽपि विपुले भोगेषु चान्येषु वा
त्वत्सेवाभवसम्मदस्य कणमप्यद्धा न विन्देत यत् ।
मर्त्यो हन्त वरीयसी ननु ततो निष्कामरूपैव ते
भक्तिः सैव ममोर्दयत्वविरतं लक्ष्मीपते! चेतसि ॥ ८५ ॥

तत्रासीश! परं त्रिमूर्तिषु तवैवाङ्घ्रिद्वयाराधनं
सर्वोत्कृष्टमिति स्म वेदितुमलं सन्ति प्रमाणान्यहो ।
लक्ष्मीनाथ! बहूनि वेदवचसां सारात्मकेषु प्रभो!
श्रीमद्भागवतादिषु प्रतिपदं दृश्यानि निस्संशयम् ॥ ८६ ॥

भक्ताधीन! पुराणसङ्ग्रह इति ख्याते हि सर्वोत्तमे
ग्रन्थे सर्वपुराणसन्ततिवचस्सारात्मके सादरम् ।
नूनं त्वन्महिमैव कैटभरिपो! निस्संशयं वर्ण्यते
तच्चासीदयि नः प्रमाणममलं त्वन्मुख्यतावेदने ॥ ८७ ॥

स्यानन्दूरपुराधिनाथ! भगवन्! यन्मन्त्रशास्त्रस्य चा-
प्यादौ नीलतनोस्त्रिमूर्त्त्यधिकता प्रोक्ता[3] तवैव स्फुटम् ।

---

१. सत्यम्. २. अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति परस्मैपदमसाधुता. इटकिटकटी गतावित्यत्र प्रश्लिष्टस्येधातोर्वा रूपम्. ३. 'अनन्तभोगे विमले फणायुतविराजिते । शयितं शार्ङ्गिणं शर्वशौरिपद्मभुवस्तदा ॥ तुष्टुवुर्हृष्टमनसो विष्टरश्रवसं विभुम् । सूक्तिभिः स्तुतिभिः प्रीतः स्वमूर्तिं स व्यदर्शयत् ॥ नीलोत्पलदलप्रख्यां नीलकुञ्चितमूर्धजाम् ।' इत्यादिप्रपञ्चसारवचनैः प्रकटितेत्यर्थः.

शौरे! तं[1] निजगाद किञ्च स[2]कलं त्वामेव नान्यं यत-

स्तस्मात् त्वत्पदभक्तिरेव सकलश्रेयःप्रदेति ध्रुवम् ॥ ८८ ॥

स्वामिन्! वर्जितपक्षपातकणिकाः [3]श्रीशङ्करस्वामिन-

स्त्वामेवाच्युतमामनन्ति सकलेष्वाद्यं जगत्कारणम् ।

त्वन्निष्ठोरुसहस्रनामविलसद्व्याख्यास्वरूपं पुन-

श्चक्रुस्तज्जयमङ्गलाभिधमहो ग्रन्थं च ते तुष्टये ॥ ८९ ॥

एकैकं विबुधव्रजे त्वदितरानाराध्य शौरे! नरा

एकैकं समवाप्नुयुर्ननु वरं गोविन्द! नातोऽधिकम् ।

भक्तानां सकलेष्टदे त्वयि परानन्दैकमूर्त्तौ स्थिते

तानेवेह भजन्ति केचिदथ तत् तेषां न किं मन्दता ॥ ९० ॥

तस्माद्यत् तव सेवयैव मनुजस्तापत्रयाद् दूरतो

मुक्तः सर्वसुखं श्रमेण रहितो भुङ्क्ते[4]ऽन्यथा दुर्लभम् ।

तन्मे त्वत्पदभक्तिरेव सहसा भूयादिति श्रीपते!

याचे त्वामरविन्दनाभ! जगति स्वादीयसी सा हि मे ॥ ९१ ॥

भक्ताश्च त्रिविधाः स्मृतास्तव पदद्वन्द्वैकरक्ताशया

लोकेषूत्तममध्यमाधमगुणैर्युक्ता बताधोक्षज! ।

तेषां भेदमहं त्वदीयकृपया किञ्चिद्वदामि प्रभो!

श्रीमद्भागवतेऽनुदृष्टमधुना स्कन्धे किलैकादशे ॥ ९२ ॥

सर्वेष्वत्र चराचरेषु भगवन्! भूतेषु पश्येत् सुधी-

स्त्वद्भावं [illegible]नेऽम्बुजाक्ष! रहितो यो भेददृष्ट्या पुमान् ।

---

१. मन्त्रशास्त्रम्. २. पूर्णम्. ३. श्रीशङ्करभगवत्पादाः. ४. अन्यथा दुर्लभं त्वत्सेवाविरहे दुष्प्रापम्.

सर्वाणि त्वयि यश्च देव! कलयेद् भूतानि विश्वात्मके
सान्द्रानन्दसुधाम्बुधौ मुररिपो! भक्तोत्तमोऽसौ स्मृतः ॥९३॥

ईशे तं समनुश्रितेष्वथ जडेष्वद्धा द्विषत्सु क्रमाद्
भक्तिं [1]सौहृदभावमङ्ग! करुणां कुर्यादुपेक्षां च यः ।
[2]भावेनाच्युत! तारतम्यसहितेनाम्भोजनाभ! प्रभो!
[3]पूर्वोक्तेष्वथ तेषु तेष्वयमहो भक्तः स्मृतो मध्यमः ॥ ९४ ॥

चित्ताम्भोरुहसम्भृतप्रातिनवप्रेमोदयेनादरात्
त्वद्रूपार्चनमेव यो भुवि पुमान् श्रद्धालुरत्रेहते ।
त्वद्भक्तेषु तथेतरेषु रहितो मैत्र्या निकामं बुधैः
सोऽयं विश्वजगन्निवास! भगवन्! भक्तः स्मृतः प्राकृतः ॥९५॥

तासु त्वं वितराशु कैटभरिपो! सर्वोत्तमामेव मे
भक्तिं काम[4]महंम्ममेत्यतिदुराधर्षाभिमानापहाम् ।
कारुण्यामृतधारया निजपदानम्रावनोद्युक्तया
स्वामिन्! दुस्तरमोहवारिधिमहावर्ते परिभ्राम्यते ॥ ९६ ॥

शौरे! स्यादधिकारिता मम कथं भक्तेरिहास्याः [5]परं
प्राप्यायाः पुरुपुण्यराशिभिरिति प्राप्नोमि नो [6]कुण्ठताम् ।
लोके यन्न हि दुर्लभं किमपि सम्प्राप्ते त्वदीये पुनः
कारुण्ये [7]भविनामधोक्षज! समस्ताभीष्टसन्दायके ॥ ९७ ॥

[8]वाचाटो भवति क्षणेन मनुजो मूकोऽपि यद्वैभवाद्
मूर्खः पण्डिततामुपैति सहसा पङ्गुर्गतौ पाटवम् ।

---

१. सौहार्दभावनाम्. २. भावनया. ३. ईशादिषु. ४. अहम्ममेत्याकारस्यातिदुर्धर्षाभिमानस्य नाशिकाम्. ५. केवलम्. इदं पुरुपुण्यराशिभिरित्यनेनान्वेति. ६. भग्नोत्साहताम्. ७. संसारिणाम्. ८. बहुभाषी.

भिक्षाशी च कुबेरतां मुररिपो! लोके दरिद्रः पुमां-
स्तत्तादृक्करुणारसे तव पुनर्लब्धेऽत्र किं दुर्लभम् ॥ ९८ ॥

आरूढे दिननायके सति तमस्तिष्ठेन्नु[1] पूर्वाचलं
मेघे वर्षति निर्भरं न विरमेत् किं चातकानां तृषा ।
रोगाः किं प्रशमं न यान्ति सहसा लब्धे हि दिव्यौषधे
प्राप्ते त्वत्करुणारसे किमु लयं नो यान्ति सर्वापदः ॥ ९९ ॥

अन्तर्यामितया समस्तजगतां ते प्रेरकस्याधुना
किं वाच्यं बहु देव! मन्दमतिना भोगीन्द्रशायिन्! मया ।
कारुण्यामृतवारिराशिलहरीसंप्लाविताङ्घ्रिद्वया-
म्भोजानम्रसमस्तलोक! कुरु मां त्वद्भक्तिपूर्णान्तरम्[2] ॥१००॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
प्रथमशतकम् ।

## अथ द्वितीयशतकम् ।

श्रावं श्रावं परमकरुणावैभवं तावकीनं
भक्तेष्वद्धा प्रकटितमये हन्त सङ्ख्यातिगेषु ।
उद्भ्रान्तातिप्रचुरपुलकं[3] पद्मनाभाधुना मे
चेतो मज्जत्यतुलिततमे सान्द्रमोदाम्बुराशौ ॥ १ ॥

सर्वेष्वस्मिन्नजित! भुवने वस्तुषु स्तोकभावं
प्राप्तेष्वंहोदलन! करुणापेक्षया ते मुरारे! ।

---

१. तिष्ठेन्नु न तिष्ठेदित्यर्थः. २. त्वद्भक्तिपूर्णम् आन्तरं मनो यस्य तम्. ३. इदं श्रवणक्रियाया विशेषणं मज्जनक्रियाया वा.

वक्ष्ये साम्यं सुदृढमवनौ केन वा माधवास्या
निश्शेषार्त्तिप्रसरवनदावच्छटाकालिकायाः[1] ॥ २ ॥

ध्यातुं वा[2] त्वन्निरुपमकृपापूरपीयूषसिन्धु-
प्रौढस्रोतोगतिमहह यन्नैव शक्तं मनो मे ।
लक्ष्मीजाने! तव गुरुकृपाभारमीशाद्य वोढुं
सामर्थ्यं स्यादयि कथमणोरस्य मे मानसस्य[3] ॥ ३ ॥

वाचाप्येतां[4] कथमपि हरे! शंसितुं चेद्यतिष्ये
वाचो दिव्या अपि न पटवो वर्णने हन्त तस्याः[5] ।
एवम्भावे गिरिधर! परं मौनमेवात्र कार्यं
यद्यप्येतं निशमय तथाप्याशयं[6] मे मुरारे! ॥ ४ ॥

जातं पुष्टं वरद! रहितं चाथ रोगैरसह्यै-
रेतद्वर्ष्म त्रिभुवनजनाराध्य! शक्त्यैव यस्याः ।
शौरे! तस्या नुतिमिह यथाशक्त्यहो त्वत्कृपाया
नो कुर्वे चेद् भवति हि कथं शारदा मे त्वनिन्द्या ॥ ५ ॥

नित्यं लक्ष्मीमुरसि सरसं बिभ्रतापि त्वयाति-
प्रीत्या मुष्टिः पृथुककलिता स्वीकृता यत् कुचेलात् ।
तस्मादज्ञस्य च मम वचः प्रीतये नो कथं ते
देवर्षीणामपि नुतिपदातीतभूम्नोऽप्यजस्रम् ॥ ६ ॥

इन्द्रद्युम्नाह्वयनरपतिश्चन्दनाद्रौ रमेश!
त्वत्सेवायां निरतहृदयः प्रागपश्यन् मुनीन्द्रम् ।

---

१. निश्शेषार्त्तिप्रसरस्यैव वनदावच्छटायाः कालिका मेघमाला तस्याः.
२. अप्यर्थे वाशब्दः. ३. पुनर्मनसो नामग्रहणमनादरार्थम्. ४. कृपाम्.
५. अस्य वाक्यस्यानन्तरं 'तन्न शक्यते' इत्यध्याहारो बोध्यः. अशक्यत्वे हेतु-र्द्वितीयपादेनोपपाद्यते. ६. अभिसन्धिं वक्ष्यमाणम्.

प्राप्तोपान्तं महिततपसं [1]त्वौर्वशेयं प्रशप्त-
　　स्तेन श्रीमन्नतुलितरुषा [2]हस्तिभूयं प्रपेदे ॥ ७ ॥

भूयस्तावत् सुबहु विहरन् शैलवर्ये त्रिकूटे
　　दुग्धाम्भोधेरयि सहचरैर्मध्यभाजि स्वकीयैः ।
प्राप्ते ग्रीष्मे मिहिरकिरणैर्व्याकुलात्मा निकामं
　　स्वेच्छं स्वच्छे सरसि कुहचिद् यूथपोऽवातरत् सः ॥ ८ ॥

हूहूनामा मुरहर! तदा कोऽपि गन्धर्ववर्यो
　　नक्रात्मत्वं सपदि गमितो देवलस्याथ शापात् ।
तिष्ठंस्तस्मिन् सरसि सहसा तं गजेन्द्रं पदाग्रे
　　जग्राहासौ हहह दशनैर्लोहसूचीशिताग्रैः ॥ ९ ॥

भूयो [3]युध्यन् स तु गजपतिस्तेन सार्धं सहस्रं
　　वर्षाण्यार्त्तो हृदि समुदितातीतजन्मोत्थभक्तिः ।
त्वामभ्यर्चंस्[4]तनुतरतनुः पुष्करैः पुष्करात्तै-
　　रप्यस्तावीत् प्रणतसुखदं [5]निर्गुणेन स्तवेन ॥ १० ॥

श्रुत्वा स्तोत्रं प्रमुदितमना वैनतेयाधिरूढः
　　प्राप्योपान्तं निहततमसा हन्त चक्रेण नक्रम् ।
हत्वा सद्यो जगदभयमन्दायिना पाणिना तं
　　स्पृष्ट्वा दन्तीश्वरमगमयः स्वीयसारूप्यमाशु ॥ ११ ॥

लीलालोलां जलधितनयामप्यनादृत्य तावद्
　　मुञ्चन् देवीमयि सरभसं हन्त नीलामिलां च ।

---

१. अगस्त्यम्. २. गजत्वम्. ३. अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वादकरणम्. ४. आहाराभावादतिकृशशरीरः. ५. गुणातीतस्वरूपपरेण.

मञ्चं चारात् फणिपतिमयं तेऽत्यजद् यो हि वेगैः[2]
सन्त्राणेऽस्य द्विपकुलपतेः कं न सम्मोदयेत् सः ॥ १२ ॥

आर्तत्राणे तव हि भगवन्! बद्धदीक्षत्वमुच्चै-
र्लोकेशातः परमयि हरे! किं त्वया द्योतनीयम् ।
यद् गोप्तुं तं गजपरिवृढं वेगतोऽगाः प्रियाश्च
त्यक्त्वा मञ्चात् क्षुधिततृषितं वत्सकं गौरिवार्त्तम् ॥ १३ ॥

तस्मान्नूनं तव चरणयोर्यः समासक्तचेता
एषोऽनाथोऽप्यहह न भजेद्वाच्यतां तत्पदस्य[3] ।
यन्नाथेनाच्युत! स भवता विष्टपानां त्रयाणां
स्यानन्दूराधिप! दृढतरं नाथवत्तामुपैति ॥ १४ ॥

मध्येभूपं विधुतवसना[4] याज्ञसेनी सुदीना
कौरव्येणाच्युत! कुमतिना हन्त दुश्शासनेन ।
हा कृष्णेति व्यसनभरिता देव! चुक्रोश यावत्
तावत् प्रादाः सदयममितां मालिकां वाससोऽस्याः ॥ १५ ॥

प्राप्ते तस्याः सदयिततते र्हन्त घोरेऽवमाने
क्षोणीशानां सदसि महतामीश! दौष्ट्याद् रिपूणाम् ।
वेमव्यापारमपि[5] च तुरीस्पर्शलेशं[6] विना या
श्रीमन्! वासांस्यतनुत जयेत् सा कृपाचातुरी ते ॥ १६ ॥

यः शोकेभ्यो बत जनममुं मोचयेद् दारुणेभ्यो
नोवाञ्छन् प्रत्युपकृतिलवं सोऽयमेवात्र बन्धुः ।

---

१. त्वरा. २. वेगः. ३. अनाथशब्दस्य. ४. हृतवस्त्रा ५. 'पुंसि वेमा वायदण्ड' इत्यमरः. ६. तुरी तन्तुवेष्टनसूक्ष्मदारुविशेषः.

अन्ये तावद् धनहृतिपरा बन्धवो नाममात्रात्
त्वन्निष्ठा[1]तो[2] भवति विशदा बन्धुता पद्मनाभ! ॥ १७ ॥

किञ्चामुष्मिन् स्थिरचरमये त्वद्वशे सर्वलोके
ये नाथत्वेन च भुवि नरा बन्धुबुद्ध्या च मर्त्यान् ।
तुल्यावस्थान् जनिमृतिजुषस्तुल्यबाह्वङ्घ्रिशीर्षान्
भो मन्यन्ते न किमियमहो मन्दतैवेह तेषाम् ॥ १८ ॥

किं वा स्निग्धैः फलमसुसमैः किं फलं ज्ञातिभिर्वा
किं वित्तेनापि च बत बहुक्लेशलब्धेन जन्तोः ।
काले वामे तदिदमखिलं व्यर्थतामेव यायात्
तत्राप्येनं पुरुषमवितुं त्वत्कृपैवेह दक्षा ॥ १९ ॥

तस्मात् सर्वैरिह हि मनुजैः सर्वथा सर्वकाले
कार्यो यत्नो जगति सुमहांस्त्वत्कृपाप्त्यै निकामम् ।
तस्यां भूयस्तरसुचरितैर्माधवासादितायां
लभ्यं शर्मेरयि[3]तुमहिराडप्यतीवाप्रगल्भः ॥ २० ॥

स्यानन्दूरेश्वर! ननु पुरा पन्नगाधीशमञ्चे
श्रीभूमीभ्यामनुपमरसं प्रोल्लसन्तं भवन्तम् ।
द्रष्टुं प्राप्ताः सनकमुखयोगीश्वराः पार्षदाभ्यां
रुद्धा जाता जयविजयसंज्ञायुताभ्यां तवैव ॥ २१ ॥

तेषां तावद्विषयपटलीनिस्पृहाणामपि द्राक्
कोपश्चक्रे ननु हृदि पदं प्रेरणात् भोस्तवैव ।

१. त्वद्गता. २. प्रत्युपकारानपेक्षया भक्तशोकमोचनाद्धेतोः. ३. वर्णयितुम्.

[1]तैस्[2]तौ सद्यो हरिचरणसंसेवनायुक्तचेष्टौ
शप्तौ योनिं भजतमचिरादासुरीमित्युपेन्द्र! ॥ २२ ॥

शोकोद्रेकाकुलितहृदयौ पार्षदौ तावदेतौ
नत्वानत्वा मुहुरपि विभो! पादयोर्हन्त तेषाम् ।
प्राप्ते घोरे सुररिपुजनुष्यप्यजस्रं भवेन्नौ
विष्णोः पादस्मृतिरिति भृशं प्रार्थयामासतुस्तान् ॥ २३ ॥

प्रातस्तावद् बहिरयि भवान् पत्रिराजाधिरूढो
लक्ष्म्या युक्तो मुनिवरततिं वीक्ष्य हृष्टः स्तुवानाम् ।
दृष्ट्वा दीनौ नि[3]रवधि निजौ पार्षदौ मा[4]मुपेतं
कष्टं जन्मात्रितयविरतावित्यवोचद् दयार्द्रम् ॥ २४ ॥

जातौ भूयो दितिसुततया काश्यपात् पार्षदौ तौ
तत्रैकोऽभूदगणितबलान्धो हिरण्याक्षनामा ।
अन्यो नाम्ना कशिपुरसुरोऽभूद्धिरण्यादिशब्द-
स्तावत्यन्तं भुवनमखिलं पीडयामासतुर्द्राक् ॥ २५ ॥

[5]धात्रीं तोये मुरहर! तयोर्दानवः [6]पूर्वमुक्तो
मग्नां चक्रे हहह कुमतिर्यावदत्यन्तखिन्नाम् ।
तावद् धात्रा धरणिधरणायार्थितस्त्वं [7]तदीया-
न्नासारन्ध्रादयि समभवः सूक्ष्मवाराहरूपः ॥ २६ ॥

सद्यो जातो गिरिसमवपुः स्वीयदंष्ट्राग्रभागे
बिभ्रत् क्षोणीं बहिरुपगतो वीक्ष्य युद्धार्थिनं तम् ।

---

१. सनकादियोगीश्वरैः. २. जयविजयौ. ३. दीधात्वर्थभूतक्षयक्रियाविशेषणमिदम्. ४. प्राप्नुतम्. ५. भूमिम्. ६. प्रथमं निर्दिष्टः (हिरण्याक्षः). ७. धातृसम्बन्धिनः.

दैत्यं हत्वा भुजधृतगदं रोषवेगारुणाक्षं
श्रीमन्नेतत् त्रिजगदगदं चाकरोस्त्वं सलीलम् ॥ २७ ॥

शौरे! तावत् प्रमुदिततमा निर्जरेशाः सशक्रा
मन्दारद्रुप्रसवपटलीं मूर्ध्नि तेऽवाकिरन्तः[1] ।
दिव्यैः स्तोत्रैर्निगमवचसां सारभूतैर्भवन्तं
लक्ष्मीजाने! नुनुवुरधिकं यज्ञरूपं परेशम् ॥ २८ ॥

एवं भूमेरपि सुमहितात् सङ्कटाद्रक्षितुर्वै
त्वत्तो नान्या गतिरतिदृढं प्राणिनां मादृशां यत् ।
भागं ते[2]स्याः कमपि जगदाराधनीयो[3]श्रितानां
तस्मान्नित्यं तव तु करुणापूरमेवाश्रयेऽहम् ॥ २९ ॥

कल्पेकल्पे खलविहतये सत्परित्राणहेतो
रूपाण्येवं सरसमुररीकृत्य चेतोहराणि ।
तत्तत्कालेष्वाजित! करुणामच्युताविष्कृतां ते
को वा दाक्ष्यं जगति बिभृयाद् वक्तुमम्भोजनाभ! ॥ ३० ॥

ज्ञात्वा कृत्तं झटिति भवता भ्रातरं दानवेन्द्रः
सद्यो जातः कनककशिपुः क्रोधशोकाकुलात्मा ।
तिष्ठंश्चक्रे सदसि कुमतिर्दानवानां प्रतिज्ञां
जेष्याम्यारा[4]दजित! सहसा त्वामितीशान्धबुद्धिः ॥ ३१ ॥

तप्ता घोरं तदनु स तपः प्रीणयित्वा विरिञ्चिं
तुष्टात् तस्मात् सुरनरमृगाद्यैरवध्यत्वमाप्तः ।

---

१. अवाङावुपसर्गौ.   २. भूमेः.   ३. प्राणिविशेषणमिदम्.   ४. इयं सम्बुद्धिरजय्यत्वस्फोरणाय प्रतिज्ञावाक्यमध्यगता कविना कृता. अथवा 'अजितसहसा' इत्येकं पदम्. अपराजितेन बलेनेति तदर्थः.

दृप्तः शक्रादहरत दिवं त्वामनादृत्य तावद्
विश्वं चैतत् सकलमचिरात् पीडयामास गाढम् ॥ ३२ ॥

प्रह्लादाख्यः समजनि सुतस्तस्य गर्भस्थितावे-
वाप्तत्वत्पादकमलरतिर्नारदात् तापसेन्द्रात् ।
सोऽयं जात्यासुरशिशुरपि त्वन्निविष्टाशयत्वा-
दासीद् भक्तिप्रसरसुमहानाटके सूत्रधारः[1] ॥ ३३ ॥

भूमन्! बाल्येऽप्यसुरपटलीमध्यगस्यास्य चास्या-
न्नो निर्यातं किल तव गुणालापतोऽन्यत् कदापि ।
यत् तद् युक्तं तृणकलुषजम्बालमृत्कण्टकानां
मध्यस्थोऽपि त्यजति सहजं किं मणिः कान्तिभारम् ॥ ३४ ॥

दृष्ट्वा पुत्रे तव चरणयोर्भक्तिमज्ञातपूर्वां
स्वीयैः सद्यः किमिदमिति स व्याकुलो दानवेन्द्रः ।
ऐच्छत् तं त्वय्यथ विरहितं हन्त भक्त्या विधातुं
तेजोभङ्गं रचयितुमिव प्रौढपञ्चास्यसूनोः[2] ॥ ३५ ॥

शण्डामर्काह्वयदितिसुतौ कल्पयामास भूयः
प्रह्लादस्याच्युत! गुरुतया दानवाचार्यशिष्यौ ।
ताभ्यां भक्तेस्त्वयि स पृथुको[3] वारितोऽप्यर्भकेभ्यो[4]
भक्तेस्तत्त्वं दृढमकथयद् देशिकासन्निधाने ॥ ३६ ॥

आहूतोऽसावथ गुरुगृहादेकदा भक्तमौलिः
पृष्टः पित्रा वद पृथुक! मे किं न्वधीतेषु सारम् ।

---

१. निर्वाहकः. २. प्रौढसिंहडिम्भस्य. ३. अर्भकः. ४. सहाध्यायिभ्यो बालेभ्यः.

प्रोचे तावत् सजलनयनो हन्त रोमाञ्चिताङ्गः
सारं शौरेः पदभजनमेवेति निस्संशयं सः ॥ ३७ ॥

श्रुत्वा वाक्यं वदनगलितं दुस्सहं हन्त सूनो-
स्त्वत्पादाब्जाद् विमुखमतिभिर्दानवः[1] पापकृत्यैः ।
सेहे नैव त्रिभुवनपते! स्वादु दुग्धं विमिश्रं
प्रालेयाभालसितसितया[2] रम्ययारोचकीव[3] ॥ ३८ ॥

रोषित्वाथो कनककशिपुर्देशिकाभ्यां[4] प्रकामं
नूनं ह्येषा सहजमतिरेवात्मजस्येति जानन् ।
नानोपायान् व्यतनुत परं तस्य हत्यै दुरात्मा
त्वत्पादाब्जे निहितमनसो हन्त मोहान्धचेताः ॥ ३९ ॥

आहूयारात् प्रतिभयतरान् दानवान् शस्त्रपाणी-
नेतान् प्रोचे स्वकुलहतकं सत्वरं तं हतेति[5] ।
घ्नन्तः शस्त्रैर्वपुषि तममुं हन्त भिन्नास्त्रगात्राः
पेतुर्वज्रस्थिरतरकृपाकञ्चुकेनावृते ते ॥ ४० ॥

भग्नोद्योगस्तदनु दनुजो दन्दशूकान् सुतीव्रान्
दृष्टिघ्राणेष्वपि विषमयान् प्रेरयामास हन्तुम् ।
प्रह्लादं तं त्वयि धृतरतिं पन्नगारातिकेतौ[6]
मातङ्गेन्द्रं बत बिसगुणेनेव बन्धुं मदान्धम् ॥ ४१ ॥

तस्याज्ञां तां तदनु फणिनः काममादृत्य सर्वे
व्यातन्वाना अहमहमिकां तं दशन्तः सरोषाः ।

---

१. हिरण्यकशिपुः. २. शर्करया. ३. अन्नद्वेषवानिव. ४. सम्प्रदाने चतुर्थी. ५. हन्तेर्लोटो मध्यमबहुवचनम्. ६. इदं विशेषणं दन्दशूकशक्तिकुण्ठत्वस्फोरकम्.

भग्नप्राया गलितरुधिरा वैनतेयैरदृश्यैः
 प्राप्योपान्तं दितिकुलपतेः सन्नता एवमूचुः ॥ ४२ ॥

दैत्येन्द्रामी वयमिह भवत्पुत्रघाते न शक्ताः
 फूत्कारोद्यद्गरलशिखया सागरोच्छोषिणोऽपि ।
इत्युक्त्वैते पुनरथ गताः पूर्वमुद्धुष्य दार्क्ष्यं
 नैताच्चित्रं द्विविध[1]वचनं हा द्विजिह्वा[2]धिपानाम् ॥ ४३ ॥

श्रुत्वा वाक्यं तदिदमधिपो व्याकुलो दानवाना-
 माहूयारात् सुतमकथयद् देव! सामोक्तिभेदैः ।
त्वत्पादाब्जे रतिमतुलितानन्ददां हन्त भङ्क्तुं[3]
 सो[4]ऽयं विष्णौ रतिमखिलदे कस्त्यजेदित्यभाणीत् ॥ ४४ ॥

भूयः क्रुद्धो द्विपपरिवृढान् पीनशुण्डोग्रदन्तान्
 हन्तुं पुत्रं निजमतिखलः प्रेरयामास दैत्यः ।
ते तं रोषान्निरवधि यथाशक्ति संपीडयन्तो-
 ऽप्येनं किञ्चिद् व्यथयितुमपि श्रीश! शक्ता न चासन् ॥ ४५ ॥

तिष्ठन्[5] पश्चादथ गुरुकुले दानवेभ्यः शिशुभ्यो
 गुह्यं तूपादिशदयि परं तत्त्वमेवैषं भक्त्या ।
श्रु[6]त्वा चादापयदथ गरं तच्च सूदैः स[7] तस्मै
 सोऽयं पीत्वा तदपि समभून्निर्व्यथः प्राग्वदेव ॥ ४६ ॥

भूयो ज्ञात्वा तव पदयुगादप्रकम्पाशयं तं
 पुत्रं हर्म्याञ्जितहिमगिरेः पातयामास यावत् ।

---

१. प्राग्वीरवादं प्रकाश्य पश्चात् स्वाशक्तिकथनरूपमव्यवस्थितभाषणम्. २. अव्यवस्थितभाषिश्रेष्ठानां सर्पश्रेष्ठानां च. ३. त्याजयितुमित्यर्थः. ४. प्रह्लादः. ५. प्रह्लादः. ६. तत्त्वं तत्त्वोपदेशनं वा श्रवणक्रियायाः कर्म. ७. हिरण्यकशिपुः.

तावत् क्षोणी ननु भगवती कोमलाभ्यां गृहीत्वा
पाणिभ्यां तं व्यतनुत [1]भवत्यस्य भक्तेः प्रशंसाम् ॥ ४७ ॥

भग्नोद्योगः पुनरपि खलो नागपाशेन बद्ध्वा
रात्रौ सिन्धौ तनयमसुरैः क्षेपयामास यावत् ।
तावन्नागा गरुडदलिताः सोपहारः [2]समस्तौत्
सिन्धु[3]श्चैनं स च सुविमलं त्वद्वपुर्द्रष्टुमैच्छत् ॥ ४८ ॥

स्थित्वा सिन्धौ स्तुवति भगवंस्त्वामथास्मि[4]न् समोदं
प्रत्यक्षस्त्वं खलु नयनयोस्तस्य भूत्वा क्षणेन ।
प्रादा भक्तिं विषयपटलीनिस्पृहायाङ्ग! तस्मै
भूयः सोऽथ त्रिभुवनपते! लोकबाह्यश्चचार ॥ ४९ ॥

पित्रा पृष्टः सदसि च समानीय यं सेवसे त्वं
विष्णुं क्वासाविति स तु तदा सर्वगं त्वां जगाद ।
तर्हि स्तम्भे कितव! न कुतो दृश्यतेऽत्रेति रोषात्
स्तम्भं हस्तोद्धृतवरकृपाणेन चाघट्टयत् सः ॥५० ॥

आसीत् सद्यो भुवनमखिलं कम्पयन् कोऽपि शब्दः
कुर्वन् भीत्या कनककशिपुं नष्टचेष्टं क्षणार्धम् ।
तेनारावेण तु बत चचालासनात् पद्मजन्मा
[5]तावत् स्तम्भात् समजनि भवद्रूपमत्यन्तघोरम् ॥ ५१ ॥

श्रीमन्! कण्ठादुपरि मृगराजात्मकं तस्य चाधो
बिभ्रद्रूपं त्रिभुवनततं मानवं घोरदंष्ट्रम् ।

---

१. त्वयि. २. संस्तुतवान्. ३. प्रह्लादम्. ४. प्रह्लादे. ५. तदा.

व्योमस्पर्शिप्रचुरधवलश्रीसटाजालमाता-
म्राक्षं तत् ते वपुरयि परं नारसिंहं नमामि ॥ ५२ ॥

दृष्ट्वा तं त्वां प्रतिभयतराकारमत्यन्तभीतो-
ऽप्यन्तर्धैर्यं बहिरभिनयन् दानवेन्द्रो दुरात्मा ।
खड्गैः शूलैः सुमहितगदासायकैश्चैष युध्यन्[1]
ज्ञात्वा कम्पं[2] तव तु पुरतश्चापतद् भग्नयत्नः ॥ ५३ ॥

गृह्णन् दैत्यं स्वयमथ निजे पातयन्नूरुयुग्मे
भित्त्वा वक्षः कुलिशपरुषैस्तस्य तूर्णं नखाग्रैः ।
पायंपायं रुधिरमचिरात् तं विहाया[3]सुरौघं
कृत्स्नं हत्वाप्ययि न समभूः शान्तकोपोग्रवह्निः ॥ ५४ ॥

ब्रह्मेशाद्याः सकलमरुतः कम्पमाना विदूरे
स्थित्वा मौलौ मुकुलितकरा[4] मानसाम्भोजजातम् ।
मोदं हत्वा त्रिभुवनरिपोर्दानवेन्द्रस्य वक्त्रे
किञ्चिन्मात्रं प्रकटयितुमप्यप्रगल्भा बभूवुः ॥ ५५ ॥

सद्यो धात्रा मुरहर! तव प्रीणनायार्थितो हि
प्रह्लादस्ते चरणयुगले द्राक् पपाताथ यावत् ।
तावद् भक्तेक्षणविगलितामेयमन्युस्तदीये
कृत्वा मौलौ करमयि! वरानप्यदास्त्वं वरेण्यान् ॥ ५६ ॥

भक्ताधीने भवति शनकैः शान्तमन्यावमर्त्याः
सेन्द्रा मौलौ सुरतरुसुमान्यच्युतावाकिरन्तः ।

---

१. युधमात्मन इच्छन्. २. कोपाटोपजं चलनम्. ३. तं विहाय प्रमीतं हिरण्यकशिपुं दूरतस्त्यक्त्वेत्यर्थः. ४. साञ्जलिबन्धाः.

रेजुर्भेरीं परमकुतुकद्योतिकां वादयन्तो
गन्धर्वाश्च श्रुतिलययुतं कीर्त्तिपूरं जगुस्ते ॥ ५७ ॥

ये ये पूर्वं त्रिदिवनिलया दैत्यराजेन दौष्ट्या-
न्नानारूपां निरुपमशुचं प्रापितास्ते च सर्वे ।
तुष्टा नष्ट्या त्रिजगदहितस्यास्य दैत्यस्य तावत्
प्रत्येकं तुष्टुवुरयि हरे! नारसिंहाकृतिं त्वाम् ॥ ५८ ॥

इत्थं भक्तेष्वजित! दृढमाविष्कृतायाः कृपाया
एकं वा ते विलसितमहो को भवेद् वक्तुमीशः[1] ।
एवम्भावे क्व तव गणनातीतकारुण्यभूमा
क्वेयं वाचो विततिरिह मे बालिशस्याम्बुजाक्ष! ॥ ५९ ॥

दृष्ट्वाप्येवं तव करुणया दारुणाभ्यो विपद्भ्यो
मुक्तान् भक्तानपरिगणितान् यस्य नोदेति बुद्धिः ।
सम्प्राप्तुं तामयि[2] परमवाग्गोचरानन्ददात्रीं
कोऽन्यो लोके भवति हि ततोऽप्यार्त्तबन्धो! विगर्ह्यः ॥ ६० ॥

एवं भक्तेष्वपरिगणितेष्वीश! सन्दर्शिताया
लेशेनापि स्नपय भगवन्! मां कृपाया मुरारे! ।
तेनैवायं भवति कमलानायकात्यन्तधन्यः
किं नो दद्यात् सुखमनुपमं बिन्दुमात्रं सुधायाः ॥ ६१ ॥

त्रैलोक्येशं निरुपमतमानन्दसान्द्रस्वरूपं
त्वां को विज्ञापयितुमर्हैकं[3] पद्मनाभात्मवाञ्छाम् ।
यद्यप्येषा[4] मम खलु परा प्रार्थना दीनबन्धो!
कार्यो नित्यं ननु मयि मदीयोऽयमित्येष भावः ॥ ६२ ॥

१. शक्तः. २. करुणाम्. ३. अल्पोऽहम्. ४. अनेन तथापीत्यस्याक्षेपः.

ब्रह्मा शक्रोऽपिच हरिदधीशास्तथान्ये च यस्याः
स्फूर्त्यैवेदं भुवनमहितं सान्द्रसाम्राज्यमापुः ।
या वा लोके सकलपरितापापहन्त्री जनानां
सेयं नित्यं शिशिरयतु मां त्वत्कृपा शार्ङ्गपाणे! ॥ ६३ ॥

दैत्याराते! जगति मनुजैर्दुर्लभानत्र भोगान्
विश्वैर्मान्याममितसुखदां सार्वभौमस्थितिं वा ।
भाग्यावाप्तं निधिमपि धनेशस्मयध्वंसिनं वा
तुच्छान् मन्ये तव हि करुणापेक्षया निर्विशङ्कम् ॥ ६४ ॥

प्राप्यं स्याच्चेद् भुवि समधिकं शर्म भोगादिषु प्रा-
गुक्तेष्वीश! त्वदुरुकरुणालभ्यसौख्याद् महान्तः ।
स्फीतं राज्यं सुबहु विनिधायात्मजेषु क्षणेन
प्राप्ताः कस्माद् वनमवनिपास्तापसैस्तुल्यशीलाः ॥ ६५ ॥

अस्ति श्रीमन्निह परिमितिः शर्मणामप्यमर्त्ये-
न्द्रावाप्यानां मखशतलसत्पुण्यपाकोदितानाम् ।
को वा कुर्याज्जगति भवदीयानुकम्पालवस्य
प्राप्त्या जन्यस्य तु परिमितिं शर्मणः पङ्कजाक्ष! ॥ ६६ ॥

भक्तव्राताधिहर! भवतैवार्पिते स्वाधिकारे
स्थित्वा भोगांस्त्रिभुवनदुरापान् रमेशाश्नुवानाः ।
अप्यम्भोजासनहरमहेन्द्रादयः कामयन्ते
यामेवास्याः किमिह मधुरं भूतले त्वत्कृपायाः ॥ ६७ ॥

यस्याः प्राप्त्यै नियतमवनौ विश्ववन्द्या महान्तो
दानस्नानव्रतजपमखादीनि कर्माणि कृत्वा ।

---

१. अस्य तर्हीत्यादिः.

नूनं विन्दन्त्यपरिगणितं शर्म यल्लेशलाभे
कस्तां वाञ्छेन्न हि तव कृपां मादृशो बालिशोऽपि ॥ ६८ ॥

स्यानन्दूरेश्वर! जयति ते दिव्यकारुण्यरूपं
ध्वस्तापायं किमपि हि धनं राजचोराद्यहार्यम् ।
नित्यं तृष्णाजनकमपि लोकेश! योगीश्वराणां
निर्द्वन्द्वानां निखिलविषयावाङ्मुखानामगण्यम् ॥ ६९ ॥

सर्वाभीष्टान्[1] वितरति नृणां यल्लवलेशं विनाहो
मूलादुत्पाटयति सहसा पादपं पापरूपम् ।
रक्षत्येतान्[2] मुरहर! तथा दारुणाभ्यो विपद्भ्यः
किं किं सौख्यं भुवि न जनयेद् देहिनां तेऽनुकम्पा ॥ ७० ॥

यस्याः प्राप्त्या परमकृपणोऽप्यत्र मर्त्यः क्षणेन
प्राप्नोत्युच्चैः श्रियमखिलसम्पूज्यतां चार्तबन्धो! ।
यस्यां किञ्चित् परमपुरुषावाङ्मुखायां कुबेरोऽ-
प्यस्वो हि स्यात् स्रजति न मुदं कस्य वा सा कृपा ते ॥ ७१ ॥

पारावारः परिलसति ते सान्द्रकारुण्यपीयू-
षात्मा स्वच्छः सततमचलो नित्यपूर्णो ह्यभङ्गः ।
मग्ना येऽस्मिन् कलिततरणास्ते दृढं मोहसिन्धो-
र्ये चामग्नाः[3] सुनियतममी हन्त मोहाब्धिमग्नाः ॥ ७२ ॥

लोके लब्धुं वरद! विविधानीप्सितान् साधनीभू-
तेयं शौरे! तव हि करुणेत्याहुरेके महान्तः ।
नायं पक्षो मम तु सकलापेक्षयास्या[4] वरत्वाद्[5]
एतन्निष्ठे[6] ध्रुवमवितथे साध्यतासाधनत्वे ॥ ७३ ॥

---

१. अर्थानिति शेषः. २. नरान्. ३. सुनिश्चितम्. ४. करुणायाः. ५. उत्तमाभीष्टत्वात्. ६. करुणानिष्ठे.

त्वत्कारुण्ये दिशति सकलं वाञ्छितं मानवानां
याच्ञापेक्षालवविरहितं विश्वपूर्णे ह्यनन्ते ।
ये याचन्ते सुरपरिवृढोद्यानदेशैकनिष्ठं
मन्दारद्रुं नियतमधमास्ते मृगेभ्योऽपि भूमन्! ॥ ७४ ॥

पापात्मानं रचयति कमप्यत्र पुण्येन पूर्णं
निस्स्वं कञ्चित् कलयति तथा सर्वसाम्राज्ययुक्तम् ।
प्रज्ञाहीनं कमपि च विधत्ते हि वागीशतुल्यं
किं किं चित्रं प्रकटयति वा त्वत्कृपा नेन्द्रजालम् ॥ ७५ ॥

पर्याप्तिः[1] स्यादजित! चिरकालोपभोगेऽखिलेषु
श्रीमन्! वस्तुष्वपि बत सुधासन्निभेष्वत्र पुंसाम् ।
नित्यं भूयोऽप्यघहर! समास्वाद्यमानं प्रमोदं
दातुं दक्षं नवमिव विना तेऽनुकम्पां किमन्यत् ॥ ७६ ॥

लक्ष्मीजाने! जगति करुणा नित्यपूर्णा प्रपा ते
नूनं पुंसाममृतमनिशं[2] मोदसान्द्रं दिशन्ती ।
यज्जायन्ते वरद! रहितास्तृष्णया यामवाप्ताः
स्यानन्दूरेश्वर! ननु भव[3]ग्रीष्मकालोष्णखिन्नाः ॥ ७७ ॥

घोराज्ञानप्रचुरतिमिरं नाशयन् दस्युजालं
रागद्वेषादिमयमचिराद् धावयन् हन्त दूरे ।
पापश्रेणीमयमरमधः पातयंस्तं दिवान्धं[4]
साधुस्तोमाम्बुजसुखकरो भ्राजते त्वत्कृपार्कः ॥ ७८ ॥

---

१. अलम्भावः. २. मोक्षं सुधां च. ३. भवशब्दः संसारे. ४. उलूकम्.

नो दक्षोऽहं किमिह बहुना त्वत्कृपाया विलासं
स्तोतुं भोगीन्द्रशयन! मनोवागतीतं निकामम् ।
किन्त्वैतावत् परमहमवैम्यार्त्तबन्धो! नराणां
भूरिश्रेयोवितरणविधौ तत्समाना तु सैव ॥ ७९ ॥

तस्माद् याचे त्रिभुवनपते! त्वत्कृपामेव सोऽहं
निश्शेषार्तिप्रशमनपरां देव! दासस्त्वदीयः ।
सर्वाभीष्टान्ययि वितरतस्ते किलायाचितान्य-
प्यस्येच्छापूरणमयि कियन्मे कृपावारिराशे! ॥ ८० ॥

अज्ञत्वादप्यजित! सुगुणैर्वर्जितत्वात् कृपायाः
पात्रत्वं मे यदि न हि तव श्रीधरास्तां[2] तदेतत् ।
जागर्त्येको[1] ननु मम गुणो यत् त्वदेकाश्रयत्वं
सोऽयं दोषान् हरति सकलान् पात्रतां चावहेन्मे ॥ ८१ ॥

दोषैर्युक्तोऽप्ययि परिजनश्चेदिहानन्यनाथो
जातु त्याज्यो न भवति हृषीकेश! तत् स्वामिनासौ ।
लोके माता बहुषु तनयेष्वेकमत्यन्तमूढं
कच्चिज्जह्यादुत मम सुतो नायमित्युल्लपेद्वा ॥ ८२ ॥

अम्भोजाक्ष! प्रतिपदमहो नित्यमागस्सहस्रं
तन्वानानामलमविदुषां मादृशां चापराधान् ।
तुच्छीकुर्वन्नव करुणया निस्तुलानन्ददात्र्या
नो चेत् का वा गतिरयि हरे! नस्त्वदेकाश्रयाणाम् ॥ ८३ ॥

ईशो किञ्च त्वयि विकिरति स्वानुकम्पासुधाया
लेशं तापत्रयहर! मयि श्रीधरानन्यनाथे ।

१. अल्पमित्यर्थः. २. न गणनामर्हतीत्यर्थः. तत्र हेतुः परार्धे दर्शितः.

पापाज्ञानप्रसरकलुषक्रोधमोहादयो मे
चित्ते स्थानं कथमिव परानन्दमूर्ते! भजेयुः ॥ ८४ ॥

स्यादेकत्राच्युत! ननु तमस्तेजसोः किं निवासो[1]
दारिद्र्यस्यापि च भुवि तथा सम्पदः सम्भवेत् किम् ।
अज्ञानस्यापि च किमु भवेत् तद्वदीश! श्रुतस्य
त्वत्कारुण्यस्य च किमु भवेत् तद्वदंहःकुलस्य ॥ ८५ ॥

किञ्चासायां मुरहर! मया तेऽनुकम्पासुधायां
किं भूयोभिर्मम गुणगणैरब्धिजाभूमिजाने! ।
तस्यामेव क्षितिधर! मया द्रागनासादितायां
किं वा लोके फलमिह मदीयैर्गुणानां सहस्रैः ॥ ८६ ॥

दैत्याराते! जगति सुधियस्त्वत्कृपामर्जयेयु-
र्भक्त्या योगेन च ननु तपस्सम्पदा वा महान्तः ।
अप्यज्ञानां मुरहर! पुनर्मादृशां चाप्रमेयं
दातुं शर्मार्हसि करुणया दीनबन्धो! त्वमेव । ८७ ॥

कुर्वन्त्यद्धा किमपि करुणां स्वीयभृत्येषु देवा
अन्ये लोके यदि चिरतरं सेविताः क्लेशपूर्वम् ।
एषा नैव प्रकृतिरयि[2] ते विश्वपूर्णानुकम्पा-
सिन्धोर्यत् तत् कुरु मयि कृपां माधव! स्वीयदासे ॥ ८८ ॥

त्वं मे माता त्वमसि जनकस्त्वं गुरुस्त्वं हि बन्धु-
स्त्वं भो दैवं परमिति जगत्सार्वभौमानुवेलम् ।
त्वय्येवालं निहितहृदयं मन्दमप्याश्वमन्द-
प्रेमोद्भूतप्रचुरकृपया मामवा[3]नन्यनाथम् ॥ ८९ ॥

---

१. अयमुत्तरवाक्येष्वपि कर्ता. २. स्वभावः. ३. रक्ष.

शौरे! दृश्यं[1] जगति किमपि त्वन्निषेवां विना नो
दातुं दक्षं शुभमिति रमानाथ! निश्चित्य बाढम् ।
त्वामेवेशं शरणमुपयातं स्वकीयानुकम्पा-
स्रोतोवृष्ट्या शिशिरय जवात् पद्मनाभादरान्माम् ॥ ९० ॥

दास्यं वाञ्छन्त्यमितधिषणा यस्य संन्यस्तदण्डा[2]
यन्महात्म्यं निगमवचसामप्यतिक्रान्तवर्त्म ।
तं त्वामीशं भुवि कुशलदं विष्टपानां त्रयाणां
प्राप्तोऽस्म्यद्धा शरणमथ मे किं त्वदन्याश्रयेण ॥ ९१ ॥

लोके वाञ्छा भवति हि नृणां वस्तुनि श्रेष्ठ एव
श्रीमत्पद्मारमण! सकलापेक्षया वीतशङ्कम् ।
श्रैष्ठ्यस्यापीश्वर! ननु परं श्रेष्ठतादातुरन्यं
त्वत्तः कं वा शरणमुपयामीह कारुण्यसिन्धो! ॥ ९२ ॥

यो वा देवस्त्रिभुवनपते! वर्ण्यते लब्धवर्णै-[3]
स्तस्योत्कर्षो नियतमितरापेक्षया हन्त वाच्यः ।
एवम्भूतं[4] मुरहर! पुनः केवलं पक्षपाता-
दुत्कर्षं भोस्तव न कथये किन्तु सत्यं ब्रवीमि ॥ ९३ ॥

जाने नैव प्रणतशुभद! च्छद्मवादं कदापि
ह्यग्रे वाच्यं प्रियमिति धिया चाथ नैतन्मयोक्तम् ।

१. नो दृश्यमिति योजना, नोपलब्धुं शक्यमित्यर्थः. त्वत्सेवातिरिक्तस्य शुभदानदक्षस्य वस्तुनोऽनुपलब्धिप्रमाणादभाव एवेति भावः. २. सन्त्यक्तदण्डाः, 'न दण्डं न शिखां नाच्छादनं न भैक्षं चरति परमहंस' इति महोपनिषदुक्तलक्षणाः परमहंसा इति यावत्. ३. विचक्षणैः. ४. उक्तन्यायसिद्धमित्यर्थः. एतच्चोत्कर्षविशेषणम्.

यद्वै सत्यं निगमवचसां श्रेणिभिर्यच्च गीतं
 यन्मे भातं हृदि ननु तव प्रेरणात् तत्त्ववोचम् ॥ ९४ ॥

भूयो भूयः साविनयमहं प्रार्थये सिन्धुकन्या-
 जाने! तां ते निरुपमकृपाधोरणीमेव नित्यम् ।
दानौत्सुक्यान्[1]मनसि किमपि ह्यर्थिनां चावकाशं
 याच्ञोत्पत्तेः[2] परमे[3]दिशता किं ममेच्छा न पूर्या ॥ ९५ ॥

त्रैलोक्याधीश्वर! मयि कदा स्याद् दृढं तेऽनुकम्पे-
 त्येवं नक्तन्दिवमयि परं चिन्तया मे युतस्य ।
वाञ्छारूपा वरद! लतिका त्वत्कृपारूपपीयू-
 षासिक्तेयं भवतु सफला पद्मनाभार्त्तबन्धो! ॥ ९६ ॥

पत्रिव्राता इव हि जननीं स्वामसञ्जातपक्षाः
 स्तन्यं वत्सा इव च नितरां क्षुत्परिश्रान्तदेहाः ।
प्रालेयार्त्तो नर इव पटं हन्त हेमन्तकाले
 त्वत्कारुण्यं स्पृहयति भृशं श्रीपते! मानसं मे ॥ ९७ ॥

छायावृक्षं पथिक इव च ग्रीष्मकालोष्णखिन्नः
 सङ्ख्याहीनं निधिमिव नरः किञ्च निस्स्वो नितान्तम् ।
वृष्टिं सारामिव च मनुजो देव! केदारवृत्तिः
 सोत्कण्ठं मे हृदयमधुना त्वत्कृपामीश! लब्धुम् ॥ ९८ ॥

विद्यालिप्सुर्नर इव भृशं सद्गुरुं विश्वमूर्त्ते!
 तेजस्वी निर्मलमिव यशो निष्ठितो[4] जैन्यभूमौ[5] ।

---

१. अयाचिताभीष्टदानकौतुकादित्यर्थः. २. देहीति वाक्यप्रयोगस्येत्यर्थः. ३. अस्य त्वयेति विशेष्यमध्याहर्तव्यम्. ४. अत्यन्तासक्तः. ५. युद्धाङ्गणे.

कर्त्ता सद्यःफलमिव हरे! कर्मणामुत्तमानां
कारुण्यं ते स्पृहयति भृशं भो मदीयं हि चेतः ॥ ९९ ॥

तस्माच्छौरे! विगलितविलम्बं त्वदीयानुकम्पा-
पीयूषाब्धेरभिनवतरा वीचयो मानसं मे ।
कुर्वन्त्वद्धा सुबहु मुदितं विश्वनेत्राधिभार[1]-
च्छेदोदग्रानुपमसुषमावास! राजीवनाभ! ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
द्वितीयशतकम् ।

## अथ तृतीयशतकम् ।

श्रीमन्! भोगीन्द्रशायिन्नचिरविकसितेन्दीवरश्रेणिकान्ति-
स्तोमाटोपप्रकामप्रशमनपटुताशालिनी सा त्वदीया ।
कान्तिर्देहस्य मल्लोचनयुगमनिशं तन्वती सम्प्रहृष्टं
तापं मन्मानसोत्थं त्रिविधमपि[2] हरत्वञ्जसा कञ्जनाभ! ॥ १ ॥

ब्रह्मा शम्भुः सुराणामधिपतिर्ऋषयो देवगन्धर्वसङ्घाः
पायं पायं हरे! यां निजनयनपुटैर्न ह्यतृप्यन् मुरारे! ।
सेयं ते रूपसम्पन्निखिलजनहृदुन्मादने बद्धदीक्षा
स्तोतुं केनेश! शक्या भवति जलधिजावल्लभास्यां धरण्याम् ॥२॥

माधुर्यादप्यहो यज्जगति सुमधुरं यच्च सारस्यपुञ्जा-
ल्लोकोत्कृष्टान्नितान्तं सरसमपि च यन्मञ्जुलत्वाच्च मञ्जु ।

---

१. दुष्टवस्तुदर्शनजन्यः सद्वस्त्वदर्शनजन्यश्च व्यथातिशय आधिभारपदस्यार्थः. २. आध्यात्मिकाधिभौतिकाधिदैविकरूपम्.

माङ्गल्याच्चेह यद्वै मुरहर! सुतरां मङ्गलं तादृशं ते
रूपं कस्येह चेतस्यजित! न जनयेत् कौतुकं कैटभारे! ॥ ३ ॥

येषां चेतो मनागप्यनघ! वशयितुं [1]नालमीश! त्रिलोक्यां
[2]वस्तु श्रीभूमिजाने! किमपि हि नियतं निर्मलज्ञानभाजाम् ।
तेषां योगीश्वराणामपि हृदि सततं मोहसन्दायिनी ते
देहश्रीः केन वा स्याद् भुवि परमुपमेया कवीन्द्रैर्वरेण्यैः ॥ ४ ॥

लावण्यं ते मुरारे! जगति कथयितुं सोद्यमास्तत् कवीन्द्रा
यावच्छक्तीह पङ्केरुहनिलयमुखा अप्यहो ज्ञानवन्तः ।
वाचो धाटीं [3]व्ययीकृत्य च ननु सकलां स्वामथो भग्नयत्ना
जायन्ते हन्त तद्वैभवकथनविधौ कस्य वा दक्षता स्यात् ॥ ५ ॥

किञ्च श्रीपङ्कजाक्ष! त्रिभुवनजनतानेत्रसारङ्गपोत-
व्रातस्याहो वशीकृत्यतिनिपुणतरं वागुरात्वं प्रपन्ना ।
शोभा ते यावदक्ष्णोर्भवति हि पुरतस्तावदेवाश्रुधारा-
रोमाञ्चांसीमतागद्गदवचनवशात् को भवेत् स्तोतुमीशः ॥ ६ ॥

स्यानन्दूरेश! यासौ रचयति दृषदा तुल्यमप्यत्र चेतः
स्वायत्तं दारुणांहःकुलशमनचणस्वीयचारित्रराशे! ।
तां ते लावण्यधारामयमधुरसुधाधोरणीं लोचनाभ्यां
भूमन्! पातुं नितान्तं प्रभवति भुवने कः पुमानल्पपुण्यः ॥ ७ ॥

[4]चित्रं शौरे! दधानोऽप्ययि तनुसुषमाश्रेणिभिर्हन्त साम्यं
श्लक्ष्णाभिर्निर्जरेन्द्रोपलसमरुचिभिश्चाञ्जनक्ष्माधरस्य ।

---

१. न समर्थ भवतीति शेषः. २. इदं भवनक्रियायाः कर्तृ. ३ व्ययित्वेत्यर्थः. ४. आश्चर्यं, जन्यजनकयोर्वैरूप्यात्.

रागं चेतस्यसीमं जनयसि भगवंस्तत्त्वबोधप्रदीप-
ज्योतिर्विध्वस्तमोहप्रविततमसां माधवानञ्जनानाम् ॥ ८ ॥

येषां तावत् प्रदायामितसुकृतपरीपाकपुञ्जैकलभ्यं
लोके जन्मोत्तमं मानुषमविकलतां चाथ सर्वाङ्गकेषु ।
नेत्राभ्यां ते शरीरप्रतिनवसुषमामेकदापि प्रपातुं
फाले रेखां न विन्यस्यति दृढमदय[2]स्तेष्वहो पद्मजन्मा ॥ ९ ॥

पीयूषाम्भोनिधिः किं किमु बत सुजनश्रेणिभाग्यैकसीमा
विश्वेषां लोचनेन्दीवरसुखकरणे बद्धदीक्षः किमिन्दुः ।
माधुर्यस्याप्रमेयस्य तु किमु परमा जन्मभूरित्यहो ते
कान्तिर्डोलायितं नः कलयति हृदयं संशयेष्वीदृशेषु ॥ १० ॥

त्यक्त्वा वाञ्छां समस्तेष्वयि बत विषयेषु क्षणादार्त्तबन्धो!
भूत्वा पर्णानिलास्वादनविहितरतिः पर्वतानां गुहासु ।
स्थित्वा तीव्रं तपः श्रीनिलय! कृतवता पूर्वजन्मन्युदारं
प्राप्यं लोके किमन्यत् फलमिह तपसो मूर्त्तिसन्दर्शनात् ते ॥११॥

अम्भोजाक्षानुवेलं निखिलजनततेर्दर्शनादेव तृप्तिं
दातुं बद्धोद्यमायां तव तनुसुषमारूपपीयूषवेण्याम् ।
यत्नादब्धेरवाप्तं कि[3]मपि सुखकरं केवलं पानकाले
पायंपायं प्रहृष्यन्त्ययि सुरभवने हा किमर्थं त्वमर्त्याः ॥ १२ ॥

नूनं त्वत्कान्तिरूपामृतरसलहरीकौमुदी निर्मलेयं
भक्तानां मानसोत्थं सकलमपि तमः कुर्वती सा विनष्टम् ।
यस्मात् तद्दर्शनेनाच्युत! सुजनसमूहाक्षिनीलोत्पलानि
प्रेमाश्रुस्फीतधारामयमथ मकरन्दं जवादुद्गिरन्ति ॥ १३ ॥

---

१. आरुण्यमासक्तिं च. २. निर्घृणो भवति. ३. ईषत्.

शुद्धज्ञानामृताम्भोनिधिनवलहरीक्षालितांहःकलङ्का
लोके श्रीनारदाद्या मुनिनिकरवतंसाः सदा लोचनाभ्याम् ।
यां देवास्वादयन्तोऽप्यगधर! युग[1]वन्नेत्रसम्मीलनोत्थं
प्रत्यूहं भावयन्ति क्षणिक[2]मवशयेत् कं न सा तावकाभा ॥ १४ ॥

चित्रं कान्तिस्त्वदीया दिनकरतनयातीरराजत्तमाल-
क्षोणीरुट्पर्णनीलाप्ययि शशिधवलां कीर्त्तिराशिं प्रसूते ।
द्रष्टॄणां मानवानां जनयति हृदये किञ्च रागं[3] मुरारे!
चेतोवाचामगम्यं नियतमविरतं दन्दशूकारिकेतो! ॥ १५ ॥

कान्त्या साम्यं तवेहाच्युत! जलदगणो वोढुमाश्वम्बुराशे-
स्तोयं गृह्णन् निकामं नभसि जडमयस्तूच्छ्रितो यावदेषः ।
तावत् स्वस्यापकर्षं तव तनुसुषमापेक्षया वीक्ष्य शोकाद्
मुञ्चन्त्यश्रूणि लक्ष्मीप्रियतम! परितो वर्षधारामिषेण ॥ १६ ॥

लब्धुं शोभां त्वदीयां कुलिशभृदुपलादर्शगर्वापनेत्रीं
स्यानन्दूरेश! वाञ्छाभरभरितमनांस्यच्युतेन्दीवराणि ।
स्थित्वा नक्तन्दिवं माधव! ननु सरसि स्वच्छतोयौघपूर्णे
मन्ये तीव्रं तपस्यन्त्यतिदृढमनसा त्यक्तनिद्राणि रात्रौ ॥ १७ ॥

एकीभूयात्र लोके त्रिभुवनसुजनश्रेणिभाग्यैकपुञ्जो
रूपं किञ्चित् समालम्ब्य हि भुवनहितायैव जागर्त्ति नूनम् ।
एवं चेत् कीदृशं[4] तत् कथय सुरुचिरं रूपमित्यत्र पृष्ट-
श्चेद् वक्ष्ये[5] नीलनीलं विरचितशयनं पन्नग[6]स्वामिनीति ॥ १८ ॥

---

१. कल्यादिमहाकालवत्. २. क्षणस्थायिनम्. ३. आरुण्यमनुरागं च. ४. किंगुणकम्. ५. उत्तरयिष्यामि. ६. आदिशेषे.

दूर्वादुर्वारगर्वप्रसरघनघटादूरनिर्वासनात्य-
न्तोद्भ्राम्यन्मारुतन्त्यास्तव हि तनुरुचेरीश! जाता प्रशस्तिः[1] [2] ।
त्रैलोक्यं शर्वभूभृत्समरुचि सहसा कुर्वती वर्णमन्यं
श्वेतिम्नः पीतरक्तादिकमिह नियतं हन्त नष्टं विधत्ते ॥ १९ ॥

किञ्चास्यामुद्यतायां तव तनुसुषमासम्भवायां हि कीर्त्यां
जेतुं वस्त्वत्र लोके सकलमपि सितं स्वीयधावल्यभूम्ना ।
मन्ये शीतांशुरुच्चैर्भयभरितमना नाथ! पीयूषधारा-
विस्रावच्छद्मनासौ विसृजति नितरां स्वेद[3]बिन्दुप्रवाहम् ॥ २० ॥

कान्त्याः कीर्त्या तवेहाच्युत! भुवनतले पङ्कजाक्षावदाते
पारावाराः परात्मन्! जगति सुविदिताः सप्तसङ्ख्यामितास्ते ।
प्राप्ता वर्णेन साम्यं कलशजलधिना हन्त सर्वेऽपि [4]जिह्वै-
कावेद्यान्योन्यभेदा वरद! समभवन्नित्यवैम्यस्तशङ्कम् ॥ २१ ॥

किञ्च त्वद्वर्ष्मकान्त्युद्भवविमलयशोमालिका कृत्स्नमेत-
च्छौरे! ब्रह्माण्डभाण्डं ननु निजमहसा तन्वती सा वलक्षम् ।
ध्वान्तं सर्वासु दिक्ष्वप्ययि बत [5]मृगयन्ती न शक्नोति लब्धुं
यत् तद्युक्तं निवासः क्व भवति हि तयोरच्युतैकत्र लोके ॥ २२ ॥

पीत्वा कान्तिं त्वदीयां निजनयनसहस्रेण शक्रेण मुक्तां
चेतःपङ्केरुहोद्यत्प्रतिनवकुतुकद्योतिकां बाष्पधाराम् ।
दृष्ट्वा स्वस्पर्धिनी काचन दिवि तटिनी सेयमित्येव मत्वा
मन्ये जह्नोस्तनूजा निवसति कुपिता चान्द्रचूडे जटान्ते ॥ २३ ॥

---

१. मारुतवदाचरन्ती मारुतन्ती, तस्याः. २. कीर्तिः. ३. भयसात्त्विकभूतम्. ४. जिह्वया एकया रसवैचित्र्यादावेदयितुं शक्यः परस्परभेदो येषां ते. ५. धवलीकरणेच्छयान्विष्यन्ती.

पातुं नेत्राम्बुजाभ्यां तव तनुसुषमां विश्वसम्मोहदात्रीं
शौरे! वीतान्तरायं दृढमनिमिषतां[1] हेतुभूतां सुराणाम् ।
दातुर्धातुः प्रशंसां ननु वचनशतैर्हन्त कृत्वापि तृप्तिं
प्राप्तः[2] को वा नु वाचामधिपतिसदृशोऽप्यत्र गीर्वाणबृन्दे ॥ २४ ॥

किं दुग्धाम्भोधिकन्यानयनयुगरुचो मेलनादीश! किं वा
सार्धं गोपाङ्गनाभिः सुबहुविहरणाद्यामुनाम्भस्युदारम् ।
किं वा दूर्वादलाभासमरुचितुलसीदामशोभानुषङ्गाद्
विश्वोन्मादावहां त्वं वहसि ननु तनौ श्यामतां सारसाक्ष! ॥ २५ ॥

भूमन्! वृन्दावनान्तर्गतनिबिडतमालावलीसंश्रयात् किं
किं वा मायूरबर्हाकलितसुललितोत्तंसशोभानुषङ्गात् ।
किं वा निर्व्याजमोदाकुलतरजननीसाञ्जनाश्रुप्रवाहा-
सेकात् त्वं नैल्यमङ्गे वहसि ननु जगन्मानसोन्मादशक्तम् ॥ २६ ॥

भक्तोत्तंसोरुपुण्यात्मक! तव सुषमारूपिणी निम्नगेयं
भाति श्रीमन्नपूर्वा ननु भुवनतले काप्ययं वीतशङ्कम् ।
या नेत्राभ्यां प्रपातुं जनयति कुतुकं वीततृष्णाकुलानां
योगीन्द्राणां विदूरीकृतहृदयसमुद्भूतवैरिव्रजानाम्[3] ॥ २७ ॥

लोके वाङ्मानसागोचरमपि सकलं शर्म जज्ञुर्[4]महान्त-
स्तुच्छं यल्लब्धिजन्यानुपमतरसुखापेक्षया निर्विशङ्कम् ।
एनां निर्वाणसौख्यामृतरसलहरीमप्यवाप्ता बतेर्ष्यां[5]
यस्मै कुर्वन्ति तस्मात् किमिह भुवि परं[6] तावकालोकभाग्यात् ॥ २८ ॥

१. निर्निमेषत्वम्. २. अनिमिषतयापि देवास्त्वद्रूपदर्शनविषये न तृप्तिमापुरिति तात्पर्यम्. ३. वैरिव्रजेत्यस्य कामाद्यरिषड्वर्गस्येत्यर्थः. ४. ज्ञातवन्तः. ५. ईर्ष्यां कुर्वन्ति अशरीरतया तावकालोकभाग्यविरहात्. ६. उत्कृष्टम्.

भक्त्याभीक्ष्णं प्रसन्नेन हि ननु भवता माधवानन्ययाहो
सन्तो देवार्प्यमाणेष्वपि वरद! वरेष्विन्द्रभोगादिषु द्राक् ।
भूत्वापेक्षाविहीनाः सकुतुकमनिशं यन्मुहुः कामयन्ते
तस्मात् त्वन्मूर्तिसन्दर्शनभवकुतुकाद् वेद्मि नो सौख्यमन्यत् ॥

किञ्च प्रत्येकमङ्गेष्वयि तव भगवन्! वीक्षितेष्वत्र लोकै-
रन्योन्योत्कर्षवत्त्वादनघ! सुषमया नाथ! तेषां निकामम् ।
दृष्टिः कुत्रेह देयेत्यनुपमविचिकित्साकुलं जायते नो
लोके कस्येह चित्तं त्रिभुवनजनसन्दोहसन्तापहारिन्! ॥ ३० ॥

तेजोविष्फूर्त्तिदूरीकृतबहलतमोराशिमध्याह्नवेला-
भ्राजिष्णुप्रौढपङ्केरुहसखशतकोटि[1]स्मयध्वंसिनीभिः ।
पर्युप्तेनोरुरत्नालिभिरिह मकुटेनाञ्चितस्योत्तमाङ्ग-
स्याभा ते शर्म निर्मात्वनुदिनमयि मे भूरिकारुण्यराशे! ॥ ३१ ॥

तेषां भासो मणीनां पुरट[2]मयकिरीटाञ्चितानां तव द्रा-
गुत्प्लुत्याकाशदेशे चिरतरममले व्याप्य तत्रेह भूमन्! ।
नानावर्णौघसम्मेलनमिषमवलम्ब्यालमन्योन्यमेता
मन्ये जन्यं वितन्वन्त्यहमहमिकया गर्वपूर्णान्तरङ्गाः ॥ ३२ ॥

लोकानां भूरिकान्तिव्रजनिलयभवद्दिव्यकोटीरजाग्र-
न्नानारत्नौघजातां नभसि विसृमरां पश्यतां कान्तिवेणीम् ।
तारा[3]ः शारत्वमापुर्न हि भवति तथेत्येवमाद्यैर्विवादै-
र्जायन्ते भक्तकल्पद्रुसम! मुखरिता नैव के के दिगन्ताः ॥ ३३ ॥

---

१. शतकोटिशब्दः सङ्ख्यावचनः. २. पुरटशब्दः सुवर्णे. ३. एतदादिना तथेत्यन्तेन विवादाकारविशेषो दर्शितः.

सर्वत्र व्योमदेशे सुबहु विसृमरां किञ्च तां रत्नशोभां
वीक्ष्यामेयां निकामं किमपि ननु महः स्तोकमाकाशसंस्थम् ।
नम्रत्वं प्राप्तमारादपजयभवया लज्जया वाञ्छति स्वं[1]
गोप्तुं[2] मन्ये वलारेर्धनुरिति भुवनख्यातया संज्ञयैव ॥ ३४ ॥

स्यानन्दूरप्रभो! हाटकमयमकुटोद्भासिनानामणीनां
कान्तिर्व्योमाङ्गणे माधव! तव वितता साधु कस्येह चित्ते ।
त्वत्प्रीत्यै वासवाद्यैः सकलसुरगणैर्व्योमरूपे विताने[3]
बद्धाया मालिकायाः सुरविटपिसुमानां न शङ्कां विधत्ते ॥ ३५ ॥

पादाम्भोजावनम्राखिलपरिजनसन्दोहसर्वार्थदाने
नित्यं बद्धोद्यमश्चामितरसफलदः पारिजातो हरे! त्वम् ।
नानारत्नोरुशोभाञ्चितनवमकुटच्छद्मना पुष्पितोऽसि
प्रायो दातुं फलानीश्वर! सुकृतपरीपाकलभ्यानि लोकैः ॥ ३६ ॥

सद्यः प्रोद्यद्विवस्वत्पटुकिरणसमूहानुषङ्गप्रकाम-
प्रोत्फुल्लाम्भोरुहान्तर्गतमधुरसपानोद्यतां भृङ्गवेणीम्[4] ।
धिक्कुर्वन् केशपाशस्तव मसृणरुचिर्बाढमाकुञ्चिताग्रः
शौरे! चेतस्यसीमं जनयतु कुतुकं[5] मामके दीनबन्धो! ॥ ३७ ॥

स्निग्धत्वं सर्वलोकस्य हि जनयितुमीशात्मनीवाप्रमेयं
स्निग्धत्वं[6] देव! यो वा प्रकटयति परं केशपाशस्त्वदीयः ।
तस्याभां विश्वचेतोहरणपटुतरां शंसितुं कस्य वा स्याद्
दाक्ष्यं भोगीन्द्रशायिन्! सुरपतिगुरुणा सन्निभस्यापि भूमौ ॥ ३८ ॥

---

१. स्वकीयम्. २. अपह्नोतुम्. ३. 'अस्त्री वितानमुल्लोच' इत्यमरः. ४. भृङ्गवेण्याः पद्मप्रत्यासत्तिविशेषणं केशपाशस्य मुखप्रत्यासत्तिं गम्यामभिसन्धाय कृतम्. ५. सन्तोषम्. ६. मसृणत्वमनुरक्तत्वं च.

आबद्धानां कचाग्रे तव मसृणतरे चारुमन्दारजाती-
कुन्दादीनां सुमानां प्रचुरपरिमलो व्याप्य सर्वं दिगन्तम् ।
नासायाः कस्य वा नो रचयति नितरां धन्यधन्यत्वमस्मिन्
लोके श्रीभूमिजाने! स्थिरचरकलिते हन्त वाचामगम्यम् ॥ ३९ ॥

किञ्च श्रीपङ्कजाक्ष! प्रचुरमधुकरश्रेणिनीले कचाग्रे
बद्धा कुन्दादिपुष्पावलिरतिधवला तावके श्लक्ष्णकान्तौ ।
शङ्कां कस्येह चेतस्यजित! न जनयेन्नाथ! तारागणानां
रात्रौ व्योमाङ्गणे निर्भरमसितरुचौ राजतां निर्मलानाम् ॥ ४० ॥

साफल्यं नेत्रसृष्टेर्भवति भुवि नृणां दर्शनादेव यस्या
या नित्यं दारुणांहोमयतिमिरकुले मित्रलीलां बिभर्त्ति ।
या वै चेतांसि पुंसां कुतुकजलनिधौ मज्जयत्यप्रमेये
सेयं ते वक्त्रलक्ष्मीः प्रदिशतु कुशलं सर्वदा मे मुरारे! ॥ ४१ ॥

योगीन्द्राणां तपोनिश्चलतममनसां मीलितानीक्षणानि
स्पष्टं यासौ विधत्ते क्षणमथ विगलन्मीलनान्यार्तबन्धो! ।
तां ते वक्त्रस्य शोभामनघ! कथयितुं लेशमात्रेण वा स्याद्
वैदग्ध्यं कस्य वास्मिन् जगति मधुरिपो! लब्धवर्णस्य भूमन्! ॥

चन्द्राम्भोजे त्वदास्येन हि भुवि समतां लब्धुमात्तप्रयत्ने
अप्राप्यैनां चिरेणाप्यहह परमिमे भग्नयत्ने च भूत्वा ।
मन्दाक्षान्नो सहेते दृढमनघ! मिथो दर्शनं तत्र लोके
मिथ्याध्यारोपितं वै कविकुलतिलकैरेतयोर्वैरवत्त्वम् ॥ ४३ ॥

दोषासक्त्या[1] समेतः सततमपि दधानोऽयमन्तः कलङ्कं[2]
सूर्याविर्भावलीनो[3] विधुरयमखिलामोदसन्दायिना ते ।

---

१. दोषसम्बन्धेन रात्रिसम्बन्धेन च. २. अपवादमङ्कं च. ३. सूरिसान्निध्यासहनो भास्करस[ान्नि]ध्यासहनश्च.

साम्यं [1]वक्रेण लब्धुं ननु यदि यतते भग्नयत्नः कथं वा
न स्यात् श्रीदानवारे! भुवनगततमोध्वंसबद्धोद्यमेन ॥ ४४ ॥

योऽसावन्तर्नितान्तं मधुहर! [2]रजसाक्रान्तमूर्त्तिर्मुरारे!
यश्चायं चाप्रसन्नः सुनियत[3]मुदये हन्त [4]राज्ञो [5]द्विजानाम् ।
पद्मः सोऽयं वदास्येन हि भुवि समतां प्राप्नुयाद्वा कथं ते
सत्त्वावासायितेन द्विजमुनिपटलीतापसर्वङ्कषेण ॥ ४५ ॥

[6]साम्यं केनापि धर्मेण हि [7]किमपि भवेद् यद्यहो तुल्यता स्याद्
वाच्या तेनेह लोके ननु कविनिकरैर्वस्तुनस्तस्य शौरे! ।
रम्ये वस्तुन्यशेषेऽप्ययि मुखसुषमापेक्षया ते निकृष्टे
भूमन्नेते कथं वा जगति तदुपमानत्व[8]माप्तुं समर्थाः ॥ ४६ ॥

लावण्यस्यांशमात्रं तव मुखकमलस्येह लिप्सुः शशाङ्को
मज्जन् [9]लावण्यपूर्णे दिनमनु जलधावुच्छ्रितो व्योमदेशे ।
दृष्ट्वा त्वद्वक्त्रलक्ष्मीं ध्रुवमपि च निजां बिम्बितां तु त्वदीये
भूषावृन्दे सलज्जो [10]महयति कुसुमैस्त्वामुडुव्रातरूपैः ॥ ४७ ॥

केचित् प्राहुः किलाङ्कं जलधिसमुदितं कर्दमं प्राहुरेके
भूच्छायामाहुरन्ये हरिण इति परे प्राहुरुन्नम्रधाम्नः ।
तारानाथस्य मध्योल्लसितमयि हरे! [11]मेचकत्वं निकामं
मन्येऽहं त्वन्मुखाभाकलनजनितया लज्जयैवोदितं तत् ॥ ४८ ॥

---

१. गुणवत्त्वमदोषत्वं चेति व्यतिरेको वक्रे बोध्यते तद्विशेषणाभ्याम्. २. रजोगुणेन पुष्पधूल्या च. ३. आविर्भावेऽभिवृद्धौ च. ४. प्रभोः ५. त्रैवर्णिकानां विप्राणां च. ६. संवादः. ७. ईषत्. ८. उपलब्धुम्. ९. लावण्यं सौन्दर्यं लवणरसवत्त्वं च, तेन पूर्णे. १०. पूजयति. ११. मालिन्यम्.

नष्टे स्वीये कलङ्के तव वदनरुचा तुल्यता स्यान्ममेति
भ्रान्त्यात्यन्तं मृगाङ्कः स्फुटमयि जलधौ क्षालयंस्ताः कलाः स्वाः ।
नैवापेतः कलङ्काद् भवति मधुरिपो! यत् तदेतन्न चित्रं
मित्रान्ते[1] भ्राजमानस्य च भुवि कुमुदं[2] पुष्यतश्चातिवेलम् ॥ ४९ ॥

चन्द्राब्जादीनि वक्त्रस्य हि परमुपमानत्वमापादितानि
श्रीमन्! लोके कवीन्द्रैः सुनियतमुपमालङ्क्रियाद्योतनार्थम् ।
त्वद्वक्त्रस्येह कान्त्यामघहर! मनसा चिन्तितायां निकामं
तस्या देवोपमानीभवितुमयि दृढं सा[3] परं स्यात् समर्था ॥ ५० ॥

प्रेमार्द्रीभूतवैमानिकवरललनाबृन्दपाणिप्रकाम-
प्रोद्वेल्लच्चामरौघोद्गतपवनचलैरावृतं चालकाग्रैः ।
भालं ते बालसोमप्रतिभटसुषमं मानसाब्जे मदीये
नित्यं निर्व्याजरूपां विकिरतु भगवन्! कामपि प्रेमधाराम् ॥५१॥

भाले तस्मिन् विशाले तव हरिणमदेनाञ्चितं चोर्ध्वपुण्ड्रं
सौरभ्योत्कर्षसंवासितनिखिलहरिच्चक्रवालेन शौरे! ।
दृष्ट्वा कस्येह चेतः प्रतिनवकुतुकाम्भोधिकल्लोलमग्नं
नो सञ्जायेत भक्तोत्तमसुकृतपरीपाक! राजीवनाभ! ॥ ५२ ॥

लोके भूषागणेभ्यो मुरहर! सकलेभ्यो वरीयस्तरं[4] तत्
स्यानन्दूरेश! नूनं रचयति तिलकं भूषितं भालदेशम् ।
भावत्कं भालदेशं मृगमदतिलकं त्वेतदाश्रित्य[5] बाढं
निस्सीमश्रीनिकेतं स्वयमनघ! परं चाश्नुते भूषितत्वम् ॥ ५३ ॥

---

१. सुहृन्नाशे सूर्यास्तमये च. २. कुत्सितसन्तोषं कैरवं च. ३. सा परं त्वद्वक्त्रकान्तिः केवलम्. अनन्वयश्चालङ्कारः. ४. स्वार्थे वा तरब्, अतिशयपरमकोटिविवक्षया वा भूयस्तरवत्. ५. तुशब्दो विशेषे लोकसाधारणतिलकव्यावृत्ते.

भालं ते पञ्चमीशीतलरुचिसुषमासारचौरं निरीक्ष्य
श्रीमन्! चन्द्रोदरस्थे गिरिधर! हरिणे चाधिकं सारभूता ।
मन्ये कस्तूरिकेयं जगति समुचितावासभूमिर्ममैषे-
त्येवं मत्वा निवासं रचयति तिलकच्छद्मना ते ललाटे ॥ ५४ ॥

शक्रास्मोर्वीधरस्यानघ! विशदतमे सानुदेशे भवन्ती
द्वेधा सप्ताश्वकन्या यदि पुनरजित! स्यन्दते तावदेषा ।
श्रीमन्! विश्वैकरम्ये तव निटिलतटे भ्राजितस्येश! साम्यं
कस्तूरीपङ्कराजत्तिलकपरिवृढस्याप्नुयाद् दीनबन्धो! ॥ ५५ ॥

अम्भोजावासशर्वत्रिदशपरिवृढाद्याः सदैवेह यस्याः
कारुण्योल्लाससंसूचकचलनलवं प्रार्थयन्ते नितान्तम् ।
सेयं भ्रूतल्लजस्याच्युत! ननु युगली तावकीना ममेह
श्रेयांस्यम्भोजनाभ! प्रदिशतु सहसा नाथ! भूयांसि बाढम् ॥५६॥

पादाम्भोजावनम्राखिलपरिजनसन्तापविच्छेदशौण्ड-
स्फीतामेयानुकम्पारसजलधितरङ्गायितं तत् त्वदीयम् ।
भ्रूयुग्मस्याप्रमेयं जगति विलसितं पश्यतः कस्यताव-
च्चेतः पियूषसिन्धौ भवति न सहसा मग्नमामज्जमुच्चैः ॥ ५७ ॥

यासौ चिल्लीलता ते त्रिभुवनजनसम्मोहने बद्धदीक्षा
वक्रत्वं बिभ्रती सत्यपि दृढमनिशं चात्मनीशाम्बुजाक्ष! ।
योगीन्द्राग्रेसराणां परमृजुमनसां भाति सम्मोददात्री
वक्तुं तस्या विलासं जगति नु कतमः श्रीपते! कोविदः स्यात् ॥

---

१. चन्द्राङ्कहरिणसम्बन्धिमदभूतेत्यर्थः. २. यमुना. ३. विततऋजूर्ध्वरेखात्मकत्वात् पुण्ड्रस्य साम्यकथनम्. ४. भ्रूलता.

सृष्टिस्थित्यप्यया भोस्त्रिजगदधिपते! विष्टपानां त्रयाणां
यस्याधीना विलासस्य हि तव भगवन्! भ्रूयुगस्यार्त्तबन्धो! ।
माहात्म्यं तस्य लोके कथयितुमरविन्दाक्ष! कस्येह वा स्याद्
दाक्ष्यं वाचामधीशेन तु समधिषणस्यापि राजीवनाभ! ॥ ५९ ॥

भक्त्या निर्व्याजयाहर्निशमखिलपरीतापविध्वंसनं तत्
पादद्वन्द्वं स्वकीयं दिनमनु भजतां सज्जनानां निकामम् ।
सर्वाभीष्टौघविश्राणनमयमहसंसूचिदोलाविलासं
नूनं स त्वं बिभर्ष्यच्युत! पुरुकरुणो भ्रूलताच्छद्मनोच्चैः ॥ ६० ॥

प्रोद्यत्तिग्मांशुरश्मिव्यतिकरविकचीभूतपङ्केरुहश्री-
चौरं कारुण्यरूपामृतरसलहरीनित्यपूर्णं त्वदीयम् ।
नेत्रद्वन्द्वं त्रयाणामपि ननु जगतां क्षेमदं मामकीनं
सन्तापौघं समस्तं शमयतु सहसा पद्मनाभातिवेलम् ॥ ६१ ॥

स्यानन्दूरेश! यद्वै सुमहिततपसां राशिभिश्चानवाप्यं
तत् सर्वं विन्दतेऽसौ जगति हि मनुजो यद्दरालोकनेन ।
तेन त्वं लोचनप्रेरितमधुरकटाक्षामृतेनादरान्मां
सिञ्चाशु त्वत्पदैकाश्रयमुरुकरुणावारिराशे! सदैव ॥ ६२ ॥

लक्ष्मीजाने! तुषारद्युतिकिरणततिर्विश्वचेतोभिरामा
पीयूषस्रोतसालं सुरगणमखिलं तन्वती हृष्टपुष्टम् ।
यस्मिन्नालक्ष्यमाणे भवति मिहिररश्मिच्छटावत् सुतीव्रा
तं श्रीमंस्त्वत्कटाक्षं जगति न कतमः कामयेतेश! मर्त्यः ॥ ६३ ॥

---

१. महशब्द उत्सवे. २. अभीष्टदानादेशभाविषु भ्रूलताचलनेषु दोलाव्यापारसम्भावना. ३. यस्य कटाक्षामृतस्य दरालोकनेन इषद्गोचरीभावेन. ४. तुल्यार्थे वतिः. विशिष्टा च भवनक्रिया तस्य प्रयोजिका.

अम्भोजं पोषयत्यन्वहमिह किरणैरात्मनो वासरेशः
पीयूषांशुस्तथा माधव! कुमुदकुलं पोषयत्येव नित्यम् ।
नेत्रद्वन्द्वे त्वदीये दृढतरमुभयोः सन्निवासात् तदेत-
न्निद्रालुत्वं हरत्येव हि कुमुदसरोजातयोर्निर्विशङ्कम् ॥ ६४ ॥

लोकामोदप्रदायिप्रतिनवतिलसूनोरुकान्तिप्रवाह-
प्रौढाहङ्कारनिर्मूलनचणसुषमावर्षिणी विश्वरम्या ।
दैत्यारे! नासिका ते जनयतु कुतुकं मानसाब्जे मदीये
ह्यश्रान्तं त्वत्पदाम्भोरुहयुगलगते सर्वलोकाधिनाथ! ॥ ६५ ॥

तादृग्दिव्यप्रभाधोरणिनिचयभृता नासिकातल्लजेन
श्रीमंस्ते व्यर्थमेवाकलयति भुवने चम्पकं साम्यभावम्[1] ।
यस्मात् सर्वेषु पुष्पेष्वपि वरद! रसग्राहिणा षट्पदेना-
प्यस्तं तत् साम्यलिप्सु त्रिजगदभिमतानां न केनात्र हेयम् ॥६६॥

सर्वेषाञ्चापकर्षादिह हि ननु निजापेक्षया भूतलेऽस्मि-
न्नर्हत्यस्यां जगत्यां किमपि सह मया नासिकां[2] वस्तु नूनम् ।
इत्येवं व्यञ्जयत्येव हि किल निजया संज्ञयैवेश![3] यासौ
तस्याः शौरे! भवेयुः कथमिव परमेतानि साम्यावहानि ॥ ६७ ॥

नानावर्णप्रसूनोल्लासिततरुलतामण्डितोद्यानदेश-
भ्राजत्[4]सद्योविपक्वारुणतरसुषमापूर्णबिम्बीफलं तत् ।
धिक्कुर्वन् विश्वरम्यो ननु सकलजगन्नाथ! दन्तच्छदस्ते
चेतो नित्यं मदीयं शिशिरयतु मुहुः प्रेमपीयूषवृष्ट्या ॥ ६८ ॥

---

१. साम्यभावनाम्. २. नेति आसिकामिति च च्छेदः, अथ चैकं पदम्. ३. 'नासिका' इत्येवंरूपया. ४. भ्राजदिति परस्मैपदमात्मनेपदस्यानित्यत्वात्.

बन्धूकं पद्मरागं पुनरपि सहकारस्य तत् पल्लवं वा
माध्वीमृद्वीकराशिं मुरमथन! सिताखण्डमिश्रं पयो वा ।
कान्त्या माधुर्यधर्मेण च परमधरीकुर्वतस्तेऽधरस्य
श्रीमन्! कस्मान्न जाने कविभिरधर इत्यत्र संज्ञा वितीर्णा ॥६९॥

कारुण्याम्भोनिधेऽसौ भवदधरमणिर्हन्त नष्टं विधत्ते
लोके यन्निर्विशङ्कं [1]मधुमधुरिमसञ्जातसान्द्रावलेपम् ।
नैतच्चित्रं तदस्याच्युत! मधुमथनस्याङ्गभावं गतस्ये-
त्येवं जानेऽहमम्भोरुहदलनयन! श्रीरमाभूमिनाथ! ॥ ७० ॥

माधुर्येणेह योऽसौ त्रिभुवनविदितेनान्वहं [2]शर्करायाः
स्यानन्दूरेश! लोके वितरति नितरां [3]शर्करात्वं मुरारे! ।
सोऽयं विश्वैकरम्यच्छविरधरमणिस्तावकीनो न केषां
वाचां [4]पारं कवीनामघशमन! परं गाहते नो जगत्याम् ॥ ७१ ॥

चित्रं बिम्बाधरस्ते त्रिजगदधिपते! चारुसन्ध्याभ्रवर्णः
सम्प्राप्तोऽपीह लोके पदमुरुमहसः पद्मरागस्य सम्यक् ।
भाति श्रीपद्मनाभ! ध्रुवमिह हि पदं निर्व्यलीकस्य भूमन्!
पद्मागारस्य नाथ! प्रतिमुहुरधिकं वृद्धिभाजो मुरारे! ॥ ७२ ॥

ता दुग्धाब्धेस्तरङ्गा इव च तुहिनरश्मेर्मयूखा इवापि
भ्राजन्मुक्ताफलानीव च बिससमुदाया इवाप्यार्त्तबन्धो! ।
दिक्षु व्याप्तत्वदीयानुपमतमयशोराशिवच्चोल्लसन्त्यो
माधुर्यार्द्राः स्मिताभास्तव भुवनपते! सन्ततं मां पुनन्तु ॥ ७३ ॥

---

१. मधुशब्दो मकरन्दे दैत्यभेदे च. २. खण्डविकारस्य. ३. उपलविशेषत्वं नीरसत्वाद् अथ च खण्डविकारत्वम्. ४. अगोचरत्वम्.

आवासं यं महान्तो विदुरपरिमितस्यानिशं शर्मराशे-
र्यस्मिन् वाञ्छां प्रकुर्वन्त्यघशमन! सदा वीततृष्णा मुनीन्द्राः ।
योऽसौ ब्रह्माण्डभाण्डान्तरगजनमनश्चौर्यविद्याप्रवीणः
शौरे! त्वन्मन्दहासं तमिह कथमहं शंसितुं स्यां समर्थः ॥ ७४ ॥

तामासाद्याम्बुजाक्ष! प्रतिपदललितां मन्दहासद्युतिं ते
नेत्रद्वन्द्वोत्पलाभ्यामयि परमुपलेनाथ तुल्याशयोऽपि ।
श्रीमन्! को वा मनोवागविषयतरसम्मोदपीयूषसिन्धौ
मग्नः प्रापञ्चिके वस्तुनि ननु सकलेऽप्याप्नुयान्नो विरागम् ॥ ७५ ॥

लोकेऽस्मिन् केवलं या हरति ननु तमो बाह्यमेवामृतांशो-
र्ज्योत्स्ना साप्यम्बुजाक्षाकलयाति कतमत् कौतुकं नो जनानाम् ।
एवम्भावे मुनीनामपि हृदयतमोनाशिनी मन्दहास-
स्याभा ते कीदृशं नो जगति न जनयेत् कौतुकं विश्वपुंसाम् ॥

तादृग्विश्वाभिरामप्रचुररुचियुते मन्दहासे[1] त्वदीये
बिम्बोष्ठस्येह किञ्चिद्विकसनविशदीभूतनिस्तुल्यकान्तिः ।
शौरे! दन्तावलिस्ते सुदृढमविकसत्कुन्दपुष्पावदाता
नित्यं मन्देतरं मे जनयतु हृदये मोदमिन्दीवराक्ष! ॥ ७७ ॥

नानारत्नौघशोभाञ्चितमकरवराकारकर्णद्वयाल-
ङ्कारप्रत्यग्रकान्तिप्रसरमिलनसञ्जातशारत्वमुच्चैः ।
स्यानन्दूरेश! गण्डस्थलयुगमयि ते नाकनाथोपलाद-
र्शाटोपध्वंसशौण्डं दलयतु सकलं मामकं तापभारम् ॥ ७८ ॥

स्निग्धे श्यामे कपोले तव भुवनपते! बिम्बितं कर्णभूषा-
युग्मं दोलायमानं जगति कलयतः कस्य वा लोचनाभ्याम् ।

---

१. मन्दहाससमय इत्यर्थः.

चेतस्युच्चैर्न शङ्कामघहर! जनयेन्मीनयोः सूरजाया-
स्तोयापूर्णे ह्रदे माधव! ननु सरसं खेलतोश्चातिवेलम् ॥ ७९ ॥

प्राचीनोर्वीधराग्रोदितमिहिररुचः कौस्तुभस्येश! कान्त्याः
सम्पर्केणालमङ्गीकृतविकचजपापुष्पशोभस्त्वदीयः ।
अत्यन्तं श्लक्ष्णकान्तेर्वरद! दरवरस्येह दर्पापहारी
कण्ठः कुण्ठेतरं मे जनयतु हृदये नाथ! वैकुण्ठ! मोदम् ॥ ८० ॥

छायासूनुर्बभूवाच्युत! जगति कथं पङ्गुपादः सुतो वै
सादृश्यं नूनमाप्नोति हि किल जनकस्यात्र सृष्टौ विधातुः ।
एवंरूपा विशङ्का मम हि परिहृता कौस्तुभस्याभया ते
साहस्राणां पदानामपि गगनमणेः पङ्गुताप्राप्तिहेतोः ॥ ८१ ॥

विश्वव्याप्तस्वकीयानुपमतमरुचिश्रेणिभिः सर्वतेजो-
जेतृत्वोद्भूतगर्वप्रसरभृतमना हन्त राजीवबन्धुः ।
शोभां ते कोस्तुभस्य स्मयभरशमनीमात्मनोऽपीह दृष्ट्वा
सायं सायं ध्रुवं मज्जति किल जलधौ व्रीलया व्याकुलात्मा ॥ ८२ ॥

ज्ञात्वा ते कौस्तुभस्यामिततमसुषमामालया निर्जितं स्वं
भर्तारं तिग्मभानुं मुरमथन! दिशस्तस्य जाया दशापि ।
सायङ्कालोन्मिषत्पाटलिमभरमिषेणालमेताः स्वकीये-
ष्वाविष्कुर्वन्ति लज्जां वदनसरसिजेष्वन्वहं दीनबन्धो! ॥ ८३ ॥

---

१. यमुनायाः. २. शङ्खश्रेष्ठस्य. ३. पङ्गुपुत्रस्य पङ्गुपदत्वौचित्या-दिति भावः. ४. किरणानां चरणानां च. पदशब्दप्रक्रमे 'पुलङ्गः किरणे पुनः' इति मेदिनी. ५. पङ्गुतायाः प्रतिहतगतित्वस्य प्राप्तेर्हेतोः. गतिप्रातिघातश्च कौस्तुभाभयाभिभवात्. ६. कादाचित्के पाटलिम्नि लज्जाविकारत्वमुत्प्रेक्ष्यते.

किञ्च श्रीमन्! प्रभाभिर्विकचतरजपापुष्पसंस्पर्द्धिनीभि-
स्तस्याथो कौस्तुभस्याच्युत! जगति समस्तेऽपि जाते प्रसन्ने।
लोकेऽस्मिन् ध्वान्तनाशात् त्रिभुवनविदिता ध्वान्तसंज्ञा प्रपेदे
नूनं साधर्म्यमुच्चैरिह हि शशविषाणादिभिः शब्दजालैः ॥ ८४ ॥

विश्वातङ्कप्रदायिप्रचुरतरभुजप्रौढतेजोमदान्धी-
भूतस्वान्तासुरौघस्मयशमनविधौ दक्षिणो दक्षिणस्ते।
बाहुः पर्युप्तनानामणिवलयगणेनाधिकं शोभमानः
सर्वाभ्यो मां विपद्भ्यः सकुतुकमवतु श्रीपते! तावकीनम् ॥ ८५ ॥

पर्यङ्के नाथ! वाताशनवरकलिते सन्मृणालावदाते
विन्यस्तो बाहुरेषोऽच्युत! तव भगवन्! जानुपर्यन्तलम्बी।
त्वन्नाथानां निकामं मुरहर! कृपणानां पुनर्मादृशानां
दातुं नूनं बतानुग्रहमिह हि समस्ताधिविच्छेदशौण्डम् ॥ ८६ ॥

आनम्रायाः पदाग्रे निखिलजनततेर्दूरिताशेषतापे
सर्वाभीष्टौघविश्राणनविधिपटुतामस्य ते वीक्ष्य बाहोः।
लज्जाभाराकुलात्मा ननु सुरविटपी निर्व्ययानां फलानां
व्याजात् गोपायतीहाच्युत! सुदृढमसौ नम्रतां लज्जयाप्ताम् ॥ ८७ ॥

आब्रह्मस्तम्बपर्यन्तमिह हि भुवने जीवजालास्त्वनन्ता
दातृत्वेनैव यस्याजित! तव करुणावारिधे! नाथ! बाहोः।
जायन्ते किञ्च जीवन्ति च वरद! दृढं हृष्टपुष्टा भवन्ति
श्रीमन्! स्तोतुं तमेनं भवति न कुतुकी को नु मर्त्योऽत्र लोके ॥

स्यानन्दूरेश! नाम्ना स्फुटमपि च गुणेनेश! यस्तावकीनो
बाहुर्वामत्वमुच्चैर्मुरमथन! दधानोऽपि निस्तुल्यकान्तिः।

---

१. अपह्नुते.

नित्यं वामेतरत्वं वहति निजपदाम्भोजभक्तेषु सत्सु
श्रेयांस्युच्चैस्तराणि प्रदिशतु स च मे भूरिकारुण्यराशे! ॥ ८९ ॥

दुग्धाम्भोराशिपुत्र्या कुवलयरचिता वीक्षितो मालिकेति
स्फूर्जद्भूरिप्रतापैः कुलिशमिति भिया नाथ! दृष्टोऽसुरेन्द्रैः ।
भक्तैः सन्तापरूपातपशमनपटोः शाखिनो नाथ! शाखे-
त्युच्चैरालक्षितोऽसौ जयतु जयतु गोविन्द! सव्यो भुजस्ते ॥ ९० ॥

आमोदाकृष्टविश्वस्थितसकलजनामोदभाराङ्गरागा-
लेपप्रोद्भूतभूरिप्रभमघहर! ते नाथ! वक्षःकपाटम् ।
राराजद्वन्यमालापरिमललहरीव्याप्तनिश्शेषलोकं
कारुण्याब्धेर्विशालं शमयतु सकलं मामकं तापभारम् ॥ ९१ ॥

तस्मिन् वक्षस्यसीमाद्भुतरुचिपटलीनित्यवासायिते ते
राजन्तीं वन्यमालां विविधरुचियुतैः पुष्पजालैः पिनद्धाम् ।
दृष्ट्वा प्रावृट्पयोदोल्लसितशतमखेष्वासशङ्कापरीतं
न स्यात् कस्येह चेतः प्रतिनवकुतुकाम्भोधिमग्नं च भूमन्! ॥

त्रैलोक्यप्रस्फुरत्त्वत्प्रचुरतरयशोराशिसाम्यावहेन
श्रीमन्मुक्तामयेनाच्युत! तव लसितं नाथ! हारेण सम्यक् ।
वक्षश्छायापथेनाधिकधवलरुचा माण्डितस्यातिवेलं
व्योम्नः सादृश्यमाप्नोति हि वरद! दृढं पत्रिमूर्द्धन्यपत्र! ॥ ९३ ॥

किञ्चास्मिन् वक्षसि त्वं मरकततलिमप्रौढशोभाहरे स्वे
श्रीवत्साङ्कं जगन्मोहनमयि वहसि श्रीधराशेषपुंसाम् ।

---

१. अनुकूलत्वम् असव्यत्वं च. २. आमोदेति सन्तोषे. ३. आमोदेति सौरभे. ४. तलिमेति तल्पे.

क्षान्तिं सागस्सु च स्वां प्रकटयितुमहो यत्तदेतन्न चित्रं
त्रैलोक्याधीश्वरस्य प्रचुरतरकृपाब्धेः क्षमानायकस्य ॥ ९४ ॥

अन्तस्थानां त्रयाणामपि ननु जगतामीश! सीमात्रयं यो
दैत्यारे! कुक्षिदेशः कलयति तिसृणां छद्मना ते वलीनाम् ।
रोमावल्या तमालक्षितिरुहपटलीकान्तिसाम्यं वहन्त्या
युक्तोऽसौ निस्तुलं मे जनयतु हृदये कौतुकं शार्ङ्गपाणे! ॥ ९५ ॥

यस्मिन् भृङ्गायमाणो विधिरिह वदनेभ्यश्चतुर्भ्यो गलन्त्या
वेदानां धारयेदं त्रिभुवनमखिलं साधु पूतं विधत्ते ।
तादृक् त्वन्नाभिपद्मं निरुपमरुचिसन्दोहवासायितं मे
नाथ! श्रेयांसि दद्यान्निरवधि जगदाराधितं पद्मनाभ! ॥ ९६ ॥

नानारत्नप्रभारूषितकनकमयानर्घकाञ्चीगुणेन
श्रीमन्! विभ्राजमानः किल भुवनपते! तावको मध्यभागः ।
अत्यन्तं कार्श्यशाल्यप्यलमकृशतरां देव! लक्ष्मीं दधान-
श्चेतस्यक्षीणरूपं जनयतु सततं मामके मोदभारम् ॥ ९७ ॥

सङ्ग्रामामेयवीर्यासुरवरपटलीत्रासदायित्वदीय-
स्फूर्जद्धारिप्रतापोपमविशदरुचा साधु पीताम्बरेण ।
ऊरू तावावृतौ ते शिखिगलसुषमाभारचौर्यौ च जङ्घे
नित्यं श्रीपद्मनाभ! प्रचुरतरमये मङ्गलं मे दिशन्तु ॥ ९८ ॥

लोके यद्वै रसालद्रुममृदुललसत्पल्लवस्यातिमात्रं
काठिन्यं सम्प्रयच्छत्यनघ! मृदुतया स्वीयया विश्वबन्धो! ।

---

१. भूमिदेवीपतेः क्षान्तिनेतुश्च.

ताद्दग्लक्ष्मीकराम्भोरुहमृदुमृदितं चापि रक्तत्वमुच्चै-
राद्त्ते यत् तदेतन्ननु पदयुगलं ते मम श्रेयसे स्तात् ॥ ९९ ॥

यत्सन्तापाब्धिमज्जत्सकलसुजनसन्दोहहृन्मन्दराद्रे-
रुद्धारात्यन्तदक्षां वरद! कमठतां चक्रपाणे! दधाति ।
तस्मिन् पादाम्बुजे ते निखिलभुवनसम्भूतिहेतोर्नितान्तं
भूयाद् भूयो रतिर्मे सततमविहता श्रीनिधे! पद्मनाभ! ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
तृतीयशतकम् ।

## अथ चतुर्थशतकम् ।

समस्तजगदुद्भवस्थितिलयैकहेतोः पुन-
र्लसद्भुवनमङ्गलाद्भुतगुणैकधाम्नः परम् ।
तवैव करुणात्मिका वरद! कौमुदी मामकं
मनोगततमःकुलं हरतु सर्वमप्यञ्जसा ॥ १ ॥

अखण्डतरचिद्रसाम्बुधिमयोऽपि मायां स्वतः
सृजन् जगदनेकधा वितथमप्यहो[1] भासयन् ।
प्रमोदमयि[2] विन्दसे तव[3] रमेश! सर्गक्रमं
किमप्यायि जगद्गुरो! कथयितुं जवादुत्सहे ॥ २ ॥

अनन्तसुखसम्भृतं त्रिगुणकालदेशातिगं
प्रभो! परमथाद्वयं प्रचुरचिन्मयं ब्रह्म तत् ।

१. असत्यमपि. २. प्रमोदं विन्दस इति योजना. क्रीडसीत्यर्थः. तथा च सूत्रितं बादरायणेन 'लोकवत् तु लीलाकैवल्यम्' इति. ३. तथा क्रीडत-स्तव.

विलेसिथ विभो! पुनः प्रलय इश्वर! [1]प्राकृते
  तदा जगति नाभवत् किमपि कारणं त्वां विना ॥ ३ ॥

सृजामिं जगदित्यहो तव बभूव वाञ्छा यदा
  तदैव भवतोऽजनि त्रिभुवनेश! माया स्वयम् ।
ततोऽजनि जगद्गुरो! [2]भुवनहेतुतत्त्वं महत्
  ततो[3]ऽहमिति साञ्ज्ञितं ननु बभूव तत्त्वं जवात् ॥ ४ ॥

तदेव खलु सात्विकी वरद! राजसी तामसी-
  ह्यहङ्कृतिरिति त्रिधा परिणतं बभूव प्रभो! ।
ततः [4]करणमानिनो [5]रविसमीरसोमादिकान्
  मनश्च सुषुवे रमारमण! तत्र वै सात्विकी ॥ ५ ॥

ततः सपदि राजसी परमहङ्कृतिस्तत्क्षणात्
  ससर्ज करणान्यहो दश तथैव चाधोक्षज! ।
पुनः प्रसुषुवे जवादपिच तामसाहङ्कृति-
  र्मुकुन्द! गगनादिकान्यनघ! पञ्च भूतान्यहो ॥ ६ ॥

[6]अमी भवदनुप्रवेशवशतस्तवाप्यैकतां
  हिरण्मयमयि प्रभो! व्यदधुरेकमण्डं महत् ।

---

१. प्राकृते प्रलये महाप्रलये 'प्रकृतौ संस्थितं व्यक्तमतीतप्रलयं तु यत् । तस्मात् प्राकृतसंज्ञोऽयमुच्यते प्रतिसञ्चर' इति विष्णुपुराणम्. २. जगत्कारणीभूतं तत्त्वम्. ३. अहङ्काराख्यम्. ४. ज्ञानेन्द्रियपञ्चकस्य कर्मेन्द्रियपञ्चकस्य चाधिष्ठातॄनित्यर्थः. ५. 'दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः' इति भागवतोक्ता दश सोमश्चेत्येकादश देवा इत्यर्थः. तत्राश्विपर्यन्ताः पञ्च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां, क(ब्रह्म)पर्यन्ताः पञ्च वाक्पाणिपादपायूपस्थानामधिष्ठातारः. सोमस्तु मनसोऽधिष्ठाता. ६. भूतेन्द्रियादयो भावाः.

तदेतदथ कारणाम्भसि पुरैव सृष्टे स्थितिं
चकार करुणानिधे! बहुशतान्यहो वत्सरान् ॥ ७ ॥

ततोऽण्डमयि संविभिद्य च हिरण्मयं तत्पुन-
श्चिरेण खलु कारणाम्भसि सुनिर्मलेऽवस्थितम् ।
क्षणान्ननु रमापते! समुदभूज्जगन्मङ्गलं
चतुर्दशजगन्मयं तव वपुर्विराडाह्वयम् ॥ ८ ॥

ततो ननु हिरण्यगर्भ इति संज्ञयात्युन्नते
विलेसिथ जगत्पते! सपदि सत्यलोके स्वयम् ।
स[1] वै स्फुटविजृम्भितामितरजोविकारो जवा-
दहो समुदभूदलं प्रविकसत्सिसृक्षारसः ॥ ९ ॥

तदर्थ[2]मनवाप्य बोधमिह सोऽथ चिन्ताकुली-
कृतात्महृदयो मनागखिलनाथ! तस्थौ स्वयम् ।
तदा तपतपेत्यहो गिरमनन्त! वैहायसी-
ममुं परमे[3]शिश्रवो विरचयंस्तपःप्रेरणाम् ॥ १० ॥

क एष हि पुमानिदं वचनमब्रवीन्मामिहे-
त्यसौ तु विचिकित्सया प्रचलितान्तरङ्गः स्वयम् ।
विलोक्य सकलास्वपीश! बत दिक्षु दृष्ट्वा विभो!
न[4] किञ्चिदपि सोऽकरोन्ननु तपः सहस्रं समाः ॥ ११ ॥

ततो हृदयपङ्कजोदितवरिष्ठभक्त्युद्भव-
प्रमोदपुलकाश्रुगद्गदतराक्षरायार्चते ।

---

१. हिरण्यगर्भो ब्रह्मा. २. सृष्ट्यनुकूलमित्यर्थः. ३. त्वं श्रावितवान्.
४. अयं नशब्दो दृष्ट्वेत्यनेन सम्बध्यते. अदृष्ट्वेत्यर्थः.

स्वमाशु परितुष्यता भुवननाथ! तस्मै पुनः
प्रदर्शितमयि त्वया निजपदं विकुण्ठाभिधम् ॥ १२ ॥

कदाचिदपि यत्र नो[1] विकुरुते हि माया पुन-
र्विमोहमदरोषभीमुखरसास्तु दूरं गताः ।
सदैव विलसत्यहो सुखमयीश! यस्मिन् दशा
तदेतदलमद्भुतं जयति भो! विकुण्ठं पदम् ॥ १३ ॥

चतुर्भुजविराजिता विधृतशङ्खचक्रायुधाः
कलायकुसुमप्रभाः सुपरिवीतपीताम्बराः ।
वसन्ति सकलाश्च यत्र हि लसद्विमानालया-
स्तथाविधमनोपमं[2] जयति तद्विकुण्ठं पदम् ॥ १४ ॥

लसत्तुलसिकावनप्रचुरसौरभस्रोतसा
निकामसुरभीकृताखिलहरिद्धितानाङ्गणम् ।
जपारुचिरविद्रुमोल्लासितमञ्जुलस्तम्भयुङ्-
निरर्घमणिगोपुरं जयति तद्विकुण्ठं पदम् ॥ १५ ॥

अनेकवनिताजनैरभिवृता सदैवेन्दिरा
प्रसूर्ननु जगत्त्रयस्य च मुकुन्द! यत्र स्वयम् ।
लसत्वयि भवत्कटाक्षरसपानबद्धस्पृहा
तदीश! भुवनाद्भुतं जयति भो विकुण्ठं पदम् ॥ १६ ॥

इतीह परिदर्शिते ननु पदे विकुण्ठाभिधे
भुजङ्गपतिशायिनं स्मितसुधाञ्चितास्याम्बुजम् ।

---

१. नो विकुरुते कार्यानुकूलं विकारं न प्राप्नोति. २. अनुपमम्. न-ञर्थकम् 'अन' इत्यव्ययमस्ति.

घनाघनलसद्द्युतिं परिलसत्पिशङ्गाम्बरं
भवन्तमयि दृष्टवान् सुकृतवारिराशिर्विधिः ॥ १७ ॥

तदा प्रचुरसम्मदोद्गतनिरर्गलाश्रुः स हि
प्रणम्य पदपद्मयोस्तव समस्तपापच्छिदोः ।
प्रयच्छ करुणानिधे! भुवनसृष्टिदक्षां मतिं[1]
ममेत्ययमयाचत त्रिभुवनेश्वर! त्वामलम् ॥ १८ ॥

स्वकीयपदपङ्कजे नतममुं विलोक्यादरात्
स्वपाणिसरसीरुहेण किल तस्य पाणिं स्पृशन् ।
भवेन्मतिरयीह ते न[2] च निबद्धता सृष्टिभि-
स्त्वितीश! समुदीरयंस्तमकरोः पटुं निर्मितौ ॥ १९ ॥

चतुर्युगसहस्रसम्मितदिनेन[3] चैकेन वै
निजेन स सृजन् जगद् वरद! तावतीं यामिनीं ।
नयत्यजित! निद्रया त्वयि निलीय सृष्टेः समं
त्विमामयि विदुर्निशां प्रलयमीश! नैमित्तिकम् ॥ २० ॥

कदाचन रमापते! ननु दिनावसाने विधिः
सुषुप्तिनिरताशयो भवति सन्निलिल्ये स्वयम् ।
जगन्ति च ययुस्तदा जठरभागमीशस्य ते
तदाभवदिदं जगत् सकलमञ्जसैकार्णवम् ॥ २१ ॥

प्रबोधय! रयेण मामहह कल्पकालावधा-
वितीह समुदीर्य भो वरद! कालशक्तिं पुनः ।

---

१. मतिः सृष्ट्यनुकूलं ज्ञानम्. २. सृष्टिभिर्निबद्धता न च भवेदिति सम्बन्धः. सृष्टिभिर्निबद्धता च रजोगुणबद्धत्वम्. तथा च श्रीभागवतम् 'ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः । यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥' ३. चतुर्युगसहस्रं हि ब्रह्मण एकमहर्भवति.

प्रसुप्तमनघ! त्वया सकलजीवरूपात्मना
स्वकीयजठरास्थितैरखिललोकजालैः समम् ॥ २२ ॥

चतुर्युगसहस्रमेवमजित! प्रसुप्ते त्वयि
प्रबुध्य हि पुरैव शक्तिरयि देव! कालाभिधा ।
प्रबुद्धमकरोत् सपद्ययि भवन्तमात्तादरं
रमावर! चराचरात्मकसमस्तलोकात्मकम् ॥ २३ ॥

विबुध्य च तदा भवान् सलिलगर्भशायी विभु-
र्विलोक्य सकलान्यहो ननु जगन्ति लीनान्यलम् ।
निजान्तरिह च स्थितेष्वनघ! तेषु सूक्ष्मात्मना
ददौ वरद! दृष्टिमीश्वर! कृपामृतस्यन्दिनीम् ॥ २४ ॥

ततोऽजनि जगत्पते! तव हि नाभिरन्ध्रादहो
समस्तजगदात्मकं कमलमेकमत्यद्भुतम् ।
अथाविरभवद् रमारमण! तत्र धाता पुनः
क्षणात् सरसिजोदरे निखिलवेदराशिः स्वयम् ॥ २५ ॥

इतीह जगतां पते! प्रथितपाद्मकल्पे[1] पुन-
र्विवर्द्धितसरोजभूः प्रविलसत्कृपावारिधिः ।
विलेसिथ जगत्त्रयीरचनकौतुकी यो भृशं
स मामव सरोजनाभ! सकलापदां सञ्चयात् ॥ २६ ॥

वसन् स तु सरोजभूस्तव तु नाभिजातेऽम्बुजे
कुतो नु जलधाविदं समजनीत्यपश्यन् स्वयम् ।

---

१. 'तस्यैव चान्ते कल्पोऽभूद् यं पाद्ममभिचक्षते । यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥' इति श्रीभागवतम्.

तदाकलनकौतुकात् सकलदिक्षु पश्यन्नहो
बभूव चतुराननो विलसदष्टनेत्रः प्रभो! ॥ २७ ॥

पयोनिधिसमुद्भवं कमलमेव पश्यन्नसौ
तदाश्रयमये भवद्वपुरनन्त! नालोकयन्।
इहाम्बुरुहमध्यगो निरवलम्बकः कस्त्वहं
कुतोऽजनि सरोरुहं त्विदमितीश! सोऽचिन्तयत् ॥ २८ ॥

ध्रुवं जलरुहोऽस्य वै किमपि कारणं सम्भवे-
दितीह चतुराननोऽथ मनसा विनिश्चित्य सः।
स्वयोगबलतो जवात् समवरुह्य[1] नालान्तरे-
ऽप्यमेयरुचितुन्दिलं तव वपुर्न चोदैक्षत ॥ २९ ॥

निवृत्य पुनरप्यसौ सरसिजे पुरावद्[2] विधि-
स्त्वदीयकरुणारसायनमवाप्तुकामः स्फुटम्।
तपः परममास्थितो मधुरिपो! शतं वत्सरान्
समस्तविषयावलीविमुखमानसः सादरम् ॥ ३० ॥

प्रसन्नहृदयस्य ते मधुरिपो! स्वरूपं परं
विलोक्य तपसोऽवधौ सरसिजासनोऽन्तर्दृशा।
प्रहृष्टहृदयो हरे! दिश धियं जगन्निर्मितौ
ममातिपटुमित्यसौ सरसमञ्जसायाचत ॥ ३१ ॥

अवाप्नुहि समस्तलोककुलसृष्टिदाक्ष्यं जवाद्
विधेहि पुनरप्यहो ननु तपो विधे! सादरम्।

---

१. समवरुह्यापीति योज्यम्. कारणदर्शनार्थं प्रयत्नविशेषं कृत्वापीति तदर्थः. २. पूर्ववत्.

भवेन्निरुपधिर्मयि प्रचुरभक्तिरप्यन्वहं
तवेति समुदीरयंस्तमकरोः प्रसन्नाशयम् ॥ ३२ ॥

पुनश्च कलयंस्तपः स खलु वत्सराणां शतं
तपोमतिबले ततो हि समवाप्य पूर्वाधिके ।
विलोक्य चलितं जले सरसिजं समीरेण वै
त्वदीयबलवार्द्धितः सलिलमारुतौ चापिबत् ॥ ३३ ॥

त्वदीयकरुणाबलाज्जलरुहेण तेन द्रुतं
जगत्त्रयमहो पुनर्विरचयन् स्वयम्भूः स्वयम् ।
मनुष्यमृगपक्षिभूरुहसरीसृपाद्यानसौ
गुणांश्च विविधानथो ननु ससर्ज लक्ष्मीपते! ॥ ३४ ॥

ससर्ज सनकं हृदा मुनिवरं सनन्दाभिधं
सनातनमहो पुनर्ननु सनत्कुमारं तथा ।
अमी वरद! सृष्टिकर्मणि तु तेन हि प्रेरिता-
स्त्वदीयपदलोलुभा न जगृहुस्तदीयां गिरम् ॥ ३५ ॥

रुषं खलु तदोदितां सपदि रुन्धतोऽस्य स्फुटं
भ्रुवोः परमिहान्तरादजनि सत्वरं शङ्करः ।
पदानि वितराह्वयानपि च मे विरिञ्चेत्यसौ
रुरोद ननु तेन वै समुदभूत् स रुद्राभिधः ॥ ३६ ॥

अवाप्य वनिताः स वै विधिनियोगतो निर्मितिं
यदा समुपचक्रमे ननु तदाथ तन्निर्मितान् ।
विलोक्य स भयानकान् सपदि रुद्रसङ्घान् प्रजा
न वै सृज तपश्चरेत्यमुमुवाच पाथोजभूः ॥ ३७ ॥

---

१. नामानि. २. रुद्रम्.

ततोऽजनि मरीचिरत्रिरपि चाङ्गिराश्चाङ्गतः
पुलस्त्यपुलहौ पुनर्भृगुवसिष्ठदक्षास्तथा ।
त्वदीयपदसेवकः सपदि नारदस्तापसो
रमावर! विधेरलं भुवनसृष्टिदक्षस्य वै ॥ ३८ ॥

सृजंस्तदनु कर्दमं वरद! धर्ममुख्यांस्तथा
विधाय च सरस्वतीं विधिरभूदनङ्गाकुलः ।
तदा तु भवदाज्ञया सनकदक्षमुख्यैः सुतै-
रसौ सुबहु बोधितो मधुरिपो! तमः स्वं जहौ ॥ ३९ ॥

विधाय निगमान् पुनः स तु तथोपवेदान् विधिः
स्वकीयमुखबृन्दतस्त्वयि सदा निबद्धाशयः ।
मनुष्यकुलनिर्मितिं मनु[1]तदीयजायात्मना
विधातुममलाशयः स्वयमथायमारब्धवान् ॥ ४० ॥

अथाहमहिनाथतल्पशयन! [2]क्ष्मासंस्थितिं
सशैलकुलवारिराशिनिकरान्तरीपात्मिकाम् ।
क्रमात् कथयितुं किमप्ययि समुत्सुकोऽस्मि प्रभो!
तदर्थमयि ते कृपा पततु मय्यनन्याश्रये ॥ ४१ ॥

लसत्यजित! लक्षयोजनमितः पुनस्तावता
रमेश! लवणाब्धिना परिवृतोऽन्तरीपोत्तमः ।
भुवो वरद! मध्यगः सुविदितोऽथ जम्बूरिति
[3]स्वमानसदृशोच्छ्रयेण लसितोऽ[4]न्तरे मेरुणा ॥ ४२ ॥

---

१. शतरूपाभिधा मनुजाया. २. भूसन्निवेशम्. ३. निजस्थौल्यानुरूपौन्नत्येन. ४. मध्ये.

इलावृतसमाह्वयं लसति वर्षमस्याभितो
हरे! नवसहस्रयोजनमितं तु तस्योत्तरे ।
भवन्ति हि तथोन्नतास्त्ववधिपर्वताः [1]शृङ्गवन्-
मुखा अपिच रम्यकप्रमुखमीश! [2]वर्षत्रयम् ॥ ४३ ॥

तथैव विलसत्यहो वरद! दक्षिणस्यां दिशि
त्रिभिस्त्ववधिपर्वतैर्निषधहेमकूटा[3]दिभिः ।
युतं तु हरिवर्षकिंपुरुषमुख्य[4]वर्षत्रयं
समस्तभुवनैकनायक! सरोजनाभ! प्रभो! ॥ ४४ ॥

पुरोदिशि च गन्धमादनसमाख्यसीमाद्रिणा
युतं लसति केतुमालमिति वर्षमत्युत्तमम् ।
तथैव खलु माल्यवन्नगयुतं प्रतीच्यां दिशि
प्रभो! लसति वर्षमम्बुरुहनाभ! भद्राश्वकम् ॥ ४५ ॥

दिशामज! चतुष्टये गिरि[5]चतुष्टयं भासते
स्फुटं त्वयुतयोजनप्रमितविस्तरोच्छ्राययुक् ।
सुवर्णधरणीधरस्य ननु मन्दराद्यं क्षिते-
रवाप्तमतिनिश्चलां मधुरिपो! त्ववष्टम्भताम् ॥ ४६ ॥

अमीषु धरणीधरेष्वपि चतुर्षु [6]चूतादिभू-
रुहोत्तमचतुष्टयं लसति सिन्धुकन्यापते! ।
तदीयफलनिस्सृतास्त्वनघ! निम्नगा वर्त्मभि-
श्चतुर्भिरिह सेचयन्त्यलमिलावृतं सन्ततम् ॥ ४७ ॥

---

१. शृङ्गवान् नीलः श्वेतः इति त्रयः. २. रम्यकं हिरण्मयं कुररिति. ३. आदिपदग्राह्यो हिमालयः. ४. तृतीयं तु भारतवर्षम्. ५. मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इति गिरिचतुष्कम्. ६. चूतजम्बूकदम्बन्यग्रोधरूपवृक्षचतुष्कम्.

लसन्ति गिरयः परे ननु कुरङ्ग[1]वैकङ्कत-
त्रिकूटशिशिरादयः कनकभूधरं चाभितः ।
गतास्त्वजित! केसरत्वमथ तस्य चाष्टौ तथा
महागिरिवराः पुनर्जठर[2]देवकूटादयः ॥ ४८ ॥

अथो दशसहस्रयोजनसहस्रयुक्ता पुरी
लसत्यजित! मेरुमूर्धनि हि मध्यतो ब्रह्मणः ।
इमामनु किलाभितो नियमितास्तथाष्टौ पुरो[3]
दिगीशनिलयास्तदीयक[4]चतुर्थभागेन वै ॥ ४९ ॥

तवैव ननु वामनस्य खलु वामपादाङ्गुली-
नखाहतजगत्कटाहविवरेण चान्तर्गता ।
अतीव महता पुनर्जगदधीश! कालेन वै
दिवि ध्रुवपदे शनैरवततार सा जाह्नवी ॥ ५० ॥

निषिच्य पुनरिन्दुमण्डलमथालये ब्रह्मणो
निपत्य ननु मेरुमूर्धनि चिरेण जह्नोः सुता ।
[5]चतुर्भिरिह नामभिः परमियं चतुर्धा भव-
न्त्यशेषमवनीतलं समतनोत् पवित्रं भृशम् ॥ ५१ ॥

नवस्वपि च वर्षराजिषु पुरा परं कीर्तिते-
ष्वशेषजगतीपतिर्ननु भवान् रमावल्लभः ।
लसत्यजित! मूर्तिभिर्नवभिरच्युतात्मोचितैः
पृथक् पृथगुपासितो नवभिरीश! [6]भक्तोत्तमैः ॥ ५२ ॥

---

१. कुरङ्गादयो विंशतिर्गिरयः. २. जठरदेवकूटपवनपारियात्रकैलासक-रवीरत्रिशृङ्गमकराख्याः. ३. नगराणि. ४. पूर्वोक्तपुरीमानतुरीयमानेनेत्यर्थः. ५. सीतालकनन्दाचक्षुर्भद्रेत्येवंरूपैः. ६. ते यथा—इलावृते भवः, भद्राश्वे भद्रश्रवाः, हरिवर्षे प्रह्लादः, केतुमाले रमा, रम्यके मनुः, हिरण्मये पितृगणाधिपतिः, कुरुषु भूः, किम्पुरुषे हनुमान्, भारते नारद इति.

अथो हयगवेषणोद्यततरैरलं कल्पिता
लसन्ति सगरात्मजैः परमिहाष्टसङ्ख्यायुताः ।
समस्तजगतीपते! स्फुटमुपान्तरीपोत्तमाः
पुरा हि समुदीरितस्य वरदान्तरीपस्य वै ॥ ५३ ॥

द्विलक्षतमयोजनः सुविदितो हरे! प्लक्ष इ-
त्यथास्ति पुनरिक्षुतोयनिधिनावृतो द्वीपराट् ।
नदीभिरचलैस्तथा ह्यपि च वर्षकैः सप्तभि-
र्युतो ननु भजन्ति भानुमयि देव! तद्वासिनः ॥ ५४ ॥

ततो द्विगुणितोत्तरोत्तरविशालताशालिनो
लसन्ति परमन्तरीपनिकराश्च सप्तापरे ।
यथाक्रमामिहाब्धिभिर्दधिघृतादिभिर्वेष्टिता
भजन्ति खलु तत्र तत्र विबुधान् पृथङ्मानवाः ॥ ५५ ॥

स्वमूर्ध्न्ययि दिगीशपत्तनचतुष्टयेनान्वितो
वृतोऽस्ति परिशुद्धतोयनिधिना तथा पुष्करः ।
रवेस्तु कनकाचलं नियमतस्त्वभिक्रामतः
सृतिः शिरसि यस्य वै परमुपासितब्रह्मणः ॥ ५६ ॥

ततः परमशेषसत्त्वनिवहैरलं वर्जिता
भवत्यजित! मृण्मयी वसुमती तथा काञ्चनी ।
ततः परमिहावृतान्धतमसेन कापि क्षिति-
र्लसत्यखिललोकगीतमहिमन्नलोकाभिधा ॥ ५७ ॥

इति क्षितिगिरीन्द्रवारिनिधिवर्षकद्वीपपु-
ङ्गवव्रजमयी पुनः सकलसत्त्वजालाश्रिता ।

१. अलोकाख्या .

अनेकतमराष्ट्रपत्तननदीवनैर्मण्डिता
शतार्धशतलक्षयोजनमितेयमुर्वी स्मृता ॥ ५८ ॥

नभस्यथ दिवाकरेन्दुसहितामितप्रोज्ज्वल-
ग्रहर्क्षकलितं पुनर्वरद! तेजसां मण्डलम् ।
भजन्ति भुवि केचिदत्र ननु शिंशुमारात्मना[1]
चरन्तमखिलेषु राशिषु यथाक्रमं त्वां सदा ॥ ५९ ॥

अधो भुवि रसातलादिभुवनानि सप्त प्रभो!
लसन्ति खलु भोगिनामनघ! वासभूतान्यहो ।
ततोऽप्यलमधः स्थितो वहति भूमिमेनां फणा-
सहस्रतलसुस्थितामविरतं फणीन्द्रः स्वयम् ॥ ६० ॥

इतीह परिकल्पिते जगति विद्यमानेष्वहो
बहुष्वनघ! जन्मराशिषु मुहुः शरीरी भ्रमन् ।
अनन्तसुकृतावलीसुपरिपाककाले पुन-
र्भजत्यजित! मानवीयमिह जन्म सर्वोत्तमम् ॥ ६१ ॥

दुरासदपराक्रमा विपुलदेहसत्त्वोज्ज्वला
अपीह भुवि केसरिद्विपतरक्षुमुख्या मृगाः ।
विवेकलववर्जिताः खलु यतस्तदीयं ततः
परं विफलमेव देव! ननु जन्म निस्संशयम् ॥ ६२ ॥

इयं हि जननी पिता त्वयमसौ मदीयो गुरुः
सुतोऽयमयमग्रजस्त्ववरजोऽयमित्याद्यहो ।

---

१. शिंशुमाराख्यजन्तुसंस्थानेन. शिंशुमारसंस्थानं च श्रीभागवते चतुर्थस्कन्धे त्रयोविंशाध्याये विवृतम्.

विविच्य हृदि वेदितुं कलयितुं च शास्त्रं परं
विना जगति मानुजं किमिह जन्म दक्षं भवेत् ॥ ६३ ॥

इतीह बहुधा पुनःपुनरपीश्वरालक्षिते
समस्तपुरुषार्थसाधनसमर्थमत्रावनौ ।
सुरासुरसुदुर्लभं ननु मनुष्यजन्मैव यद्
ब्रवीमि हि तदुद्भवादिकमिहात्र संक्षेपतः ॥ ६४ ॥

स्वकर्मबलचोदितः प्रथमतो जनन्यास्त्वयं
जनो जठरगह्वरं विशति मांसपिण्डात्मकः ।
ततोऽङ्कुरितमौलिपाणिचरणः क्रमाज्जायते
त्वदेकशरणो हरे! दशभिरङ्ग! मासैः स्फुटम् ॥ ६५ ॥

असह्यतरपूतिगन्धिरुधिरामिषान्त्राविलात्
कदा बहिरितो व्रजाम्यहमितीह वाञ्छन् भृशम् ।
बलादथ समीरितः सपदि सूतिकावायुना
रुदन्नथ नराकृतिर्भुवि रमेश! सञ्जायते ॥ ६६ ॥

ततः स्वजननीस्तनास्वदनमात्रपुष्यत्तनुः
क्रमेण परिवर्धितः पुनरथान्नपानादिभिः ।
भवत्यथ पटुः शनैश्चलितुमप्यथो भाषितुं
कलं स जनयन्मुदं समधिकां स्वपित्रोः स्फुटम् ॥ ६७ ॥

ततोऽजित! कलासु हन्त गुरुभिः परं शिक्षितो-
ऽप्यसौ वहति दाक्ष्यमासु नियतं यथावासनम् ।
मरौ तादितरावनावपि च बीजमुप्तं समं
ददाति हि महीगुणानुगुणमेव तावत् फलम् ॥ ६८ ॥

---

१. आलोचिते आलोचनायां कृतायां सत्यामिति यावत्.

त्रिधा भवति देहिनां प्रकृतिरप्यहो सात्त्विकी
रमारमण! राजसी ह्यपि च तामसीति प्रभो! ।
प्रवृत्तिरखिलेषु हन्त भवतीह कृत्येष्वहो
पुनर्निजगुणानुरूपमयि नाथ! तेषां पृथक् ॥ ६९ ॥

भवन्ति हृदयोद्भवा भुवि नृणां तु षड् वैरिणो
मुकुन्द! भृशदुर्दमाः प्रबलकामरोषादयः ।
जितास्त्वजित! येन ते स सुकृती जितो यस्तु तै-
[1]र्न चास्ति भुवनत्रयेऽपि च तथाविधः पातकी ॥ ७० ॥

तमःकलुषिताशयाः कतिचिदत्र योषित्स्वहो
भ्रमन्ति हि सुखभ्रमेण भुवि पापकृत्या नराः ।
पतन्ति शलभा यथा शिखिनि[2] भक्ष्यबुद्ध्या स्वयं
स्वनाशमनवेक्ष्य हन्त बैडिशे[3] च मीना यथा ॥ ७१ ॥

परे ननु धनार्जनैकनिरता नराः पापिनः
स्वभर्तुरहितं च चौर्यमथवा परोपद्रवम् ।
विधाय समुपार्जयन्ति हि धनं त्वनालोच्य हा
तटित्स्फुरितभङ्गुरत्वमिह तस्य[4] विश्वार्त्तिहन्! ॥ ७२ ॥

अवाप्य जगदीश्वरे भवति भक्तिमत्युत्तमा-
मनन्तसुकृतव्रजैरयि निकाममेके जनाः ।
विधूय निरयावहेष्वलममीषु[5] वाञ्छां सदा
परं सुखमवाप्नुवन्ति कृपया तवाधोक्षज! ॥ ७३ ॥

अथाहमरविन्दनाभ! कथयामि वर्णाश्रमो-
चितं सुपरिशुद्धमीश! ननु धर्ममद्यादरात् ।

---

१. जिततुल्य इत्यर्थः. २. अग्नौ. ३, मत्स्यबन्धने. ४. धनस्य.
५. धनेष्वित्यर्थः.

त्वयैव परमुद्धवाय निजभक्तवर्याय तं
पुरा समुपदिष्टमत्र कृपयैव ते किञ्चन ॥ ७४ ॥

रमावर! सुदुर्लभं भुवि मनुष्यजन्मैव तद्
बहुष्वथ विवेकलेशरहितेषु देहिष्वहो ।
ततोऽप्यतिदुरासदं ननु महीसुरत्वं हरे!
विना श्रमलवं नरो भजति यत्र सेवां तव ॥ ७५ ॥

ततोऽहमिह साम्प्रतं तदिह जन्म सर्वोत्तमं
तवैव कृपया पुनर्जगति विन्दता देहिना ।
विधेयमलमाश्रमोत्तमचतुष्टयस्योचितं
ब्रवीमि ननु धर्ममीश! भवता परं कल्पितम् ॥ ७६ ॥

अथोपनयनादवाप्य मनुजो द्विजत्वं परं
वसन् गुरुकुले सदा ह्यजिनमेखलादण्डधृत् ।
अखण्डिततनूरुहोऽप्यथ हुतानलः सन्ध्ययो-
र्विनीतहृदयो गुरोः स निगमानधीयीत च ॥ ७७ ॥

प्रगे[1] च दिवसावधौ स्वगुरवे समानीय स-
न्निवेद्य परमत्तुमर्हति स भैक्षमन्नं शुचि ।
निकाममथ वर्जयेदपि वधूमुखालोकनं
सदैव कलयेद् गुरोः सकुतुकञ्च शुश्रूषणम् ॥ ७८ ॥

इति व्रतमखण्डितं निगमशिक्षणान्तावधि
द्विजो ननु वहन् पुनः स्वगुरवे तथा दक्षिणाम् ।
वितीर्य च यथासमृद्धि सहसा त्वदीयाज्ञया
विवर्जितमदस्त्यजेत् तमिममाश्रमं त्वादिमम् ॥ ७९ ॥

---

१. प्रातः.

विविक्षुरथ[1] भूसुरः स्वयमथो गृहस्थाश्रमं
सतीमिथ यवीयसीमपि समानवर्णोद्भवाम् ।
निकाममजुगुप्सितां विधिवदुद्वहेत् सादरं
गुणाकृतिमुखैरहो परमथानुरूपां वधूम् ॥ ८० ॥

अवाप्य दयितां द्विजः परमथानुरक्तां निजे
तया सममखण्डितं सततमाग्निहोत्रं दधत् ।
यजेच्च पुरुदक्षिणैरपि मखैस्तु यज्ञेश्वरं
भवन्तमथ पौर्णमासपशुबन्धदर्शादिभिः ॥ ८१ ॥

अकामकलुषीकृतः परमथानसूयस्तथा
दयालुरखिलेषु भूतनिवहेषु दान्ताशयः ।
निकामपरितुष्टधीः परमथाल्पलाभेन च
त्वयीश! निरतः सदा ननु भवेद् गृहस्थाश्रमी ॥ ८२ ॥

विविक्षुरथ काननं स्वतनयेषु भार्यां निजां
निधाय तु सहैव वा वनभुवं द्विजः प्रव्रजेत्[2] ।
नयेच्च वन एव भागमखिलं तृतीयं पुन-
र्मुनिर्ननु निजायुषो विधृतवल्कलो निस्पृहः ॥ ८३ ॥

त्रिकालमपि चाचरेदथ जलाशये मज्जनं
स्ववृत्तिमिह वन्यमूलफलराशिभिः साधयेत् ।
पुनः शयनमाचरेन्ननु निशास्वहो स्थण्डिले[3]
सदा परमदुष्करं भुवि तपश्चरेत् तत्परः ॥ ८४ ॥

यदा समुपजायते हि निरयात्मकेष्वात्मनो
विरक्तिरथ लोकराशिषु निकाममत्र द्विजः ।

---

१. वेष्टुमिच्छुः. २. वानप्रस्थो भवेदित्यर्थः. ३. निरास्तरणे भूतले.

तदा त्रिजगतां गुरौ [1]भवति लग्नचेता दृढं
रमावर! परिव्रजेत् स्वमनसा विधूताग्निकः ॥ ८५ ॥

वहन्नथ कमण्डलुं वरद! वेणुदण्डं तथा
चरेत् परमनिस्पृहो भुवमिमामसक्तो भृशम् ।
विधूतमदमत्सरो विहितसाम्यभावोऽखिले-
ष्वहो न हि रतो भवेदपि च [2]वादिवादादिषु ॥ ८५ ॥

[3]न्यसेद् भुवि पदं यतिः पथिषु दृष्टिपूतं चरन्
पिबेदपि जलं पुनर्जगति वस्त्रपूतं भृशम् ।
वदेदलमनिन्दितामहह सत्यपूतां गिरं
तथा हृदयपूतमेव खलु कर्म सर्वं चरेत् ॥ ८७ ॥

विहाय तु विगर्हितानपि चतुर्षु वर्णेष्वहो
समं जगति संयमी स्वभरणाय भिक्षां चरेत् ।
सकृत् त्वनियतेषु नाथ! सदनेषु सप्तस्वहो
भवेच्च परितुष्टधीः [4]सुबहु तत्र [5]लब्धान्धसा ॥ ८८ ॥

इति त्वदुपकल्पिते ननु यतिः स्वधर्मे रतः
समस्तविषयावलीविमुखमानसः सन्ततम् ।
हृदम्बुजसमुद्भवत्प्रचुरभक्तिभारोऽ[6]वधौ
चराचरजगद्गुरुं नियतमाप्नुयात् त्वां परम् ॥ ८९ ॥

अथाहमि[7]तरैस्त्रिभिर्नलिननाभ! वर्णैर्जग-
त्युपास्यमखिलं पृथक् पृथगनन्त! धर्मं वरम् ।

---

१. त्वयि. २. वादिवादो जल्पवितण्डादिरूपस्तदादिषु. ३. अस-धातुर्भौवादिकः. धातूनामनेकार्थत्वान्न्यस्येदित्यर्थः. ४. परितोषक्रियाविशेषणम्. ५. लब्धेनान्नेन. ६. देहावसाने. ७. क्षत्रियवैश्यशूद्रैः.

क्रमेण कथये यथामति तवैव कारुण्यत-
श्चतुर्दशजगन्नियन्तुरमितानुभावस्य च ॥ ९० ॥

अवाप्य धरणीपातित्वमिह बाहुजो न्यायतो
निजाः प्रणिहिताः प्रजाः स्वसुतवद् भृशं पालयेत् ।
धनं च तद्[1]उपाहृतं सुबहु देवभूदेवयोः
[2]कृते तु विनियोजयेदथ यथोचितं सन्ततम् ॥ ९१ ॥

युधि स्थिरपराक्रमः परिलसद्यशोभाजनं
वदान्यवरतां दधत् सततमर्थिसङ्घेष्वहो ।
वशी च परमास्तिको निगमगीतवर्णाश्रमा-
दिधर्मपरिपालने च निरतो भवेद् भूपतिः ॥ ९२ ॥

अथात्र पशुरक्षया च कृषिभिर्वणिग्वृत्तिभिः
स्वकालमनिशं नयेदजित! वैश्यजातिः स्वयम् ।
[3]द्विजस्य [4]परिचर्यया विरहितः स्वयं पाप्मना
कथञ्चिदिह शूद्रजातिरपि कल्पते श्रेयसे ॥ ९३ ॥

विधातुमनिशं मतिं तनुजुषोऽस्य सन्मार्गगां
मुकुन्द! बहवो लसन्ति [5]गुरवो धरामण्डले ।
तदीयगुणमाकलय्य च विधूय दोषावलीं
नरो विगतसंशयं न तु विमोहमत्राप्नुयात् ॥ ९४ ॥

क्षमा च मरुदम्बरं सलिलमग्निरिन्[6]दू रविः
कपोत[7]शयुसिन्धवः शलभपुष्पलिट्सिन्धुराः ।

---

१. प्रजाभिः करत्वेन समर्पितम्. २. तादर्थ्येऽव्ययम्. ३. त्रैवर्णिकस्य. ४. इयं पाप्मविरहितत्वे हेतुः. ५. ते च भूम्यादय उत्तरश्लोके वक्ष्यन्ते. ६. इन्दुः. ७. शयुरजगरः. सिन्धुः समुद्रः.

तथेह मधुहा[1] मृगोऽ[2]प्यथ तथाण्डजः[3] पिङ्गला[4]
मुकुन्द! कुररोऽर्भकोऽप्यथ कुमारिका बाणकृत् ॥ ९५ ॥

अहिः परमथोर्णनाभिरिह सिन्धुकन्यापते!
सुपेशकृ[5]दितीरितास्तु गुरवश्चतुर्विंशतिः ।
अमी जगति चर्यया हि निजयैव पुंसां सतां
हितामु[6]पदिशन्ति नाम सरणिं शुभावाप्तिदाम् ॥ ९६ ॥

विलोक्य च बतेदृशानिह शुभाप्तिहेतून् बहून्
विवेकरहितास्तु ये भुवि चरन्ति पापान्यहो ।
निबध्य यमपूरुषैरहह कालपाशैर्दृढै-
रमी निरययातनां बहु भवन्ति नीता मृतौ ॥ ९७ ॥

लुठन्तमथ दारुणे नरकसीम्नि हाहेत्यहो
रुदन्तमधिकं क्षुधाप्यथ पिपासया व्याकुलम् ।
विमर्द्य शितहेतिभिर्विकरुणं समाकर्षय-
न्त्यतीव बत तप्तताम्रकलिते तले पापिनम् ॥ ९८ ॥

विमोचयितुमीदृशान्नरकसङ्कटात् प्राणिनं
मुरान्तक! पटीयसी तव हि भक्तिरेकैव सा ।
इमां[7] तु नवधा जगौ दनुजबालकेभ्यः पुरा
भवत्पदपरायणोत्तमतमः स का[8]याधवः ॥ ९९ ॥

श्रुति[9]र्वरद! कीर्तनं स्मरणमङ्घ्रिसंसेवनं
रमावर! तथार्चनं त्वपिच वन्दनं दासता ।

---

१. माक्षिकहर्ता. २. हरिणः. ३. मीनः. ४. तन्नामिका वेश्या. ५. कीटस्य भ्रमरत्वापादको भृङ्गविशेषः. ६. उपदेशश्च श्रीभागवते एकादशस्कन्धे ७,८,९ अध्यायेषु विवृतः. ७. भक्तिम्. ८. कयाधुर्हिरण्यकशिपोर्भार्या. तस्या अपत्यं प्रह्लादः. ९. श्रवणम्.

त्वयैव सह सख्यमच्युत! निवेदनं चात्मन-
स्त्वितीह नवधा स्मृता भवति भक्तिरत्युत्तमा ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
चतुर्थशतकम् ।

## अथ पञ्चमशतकम् ।

अथ सरसिजनाभ! त्वत्कृपैकावलम्बा-
दहमिह नवधा तं कल्पितं भक्तिमार्गम् ।
कथयितुमयि सद्यस्तूत्सहेऽङ्ग! क्रमेण
प्लवमिव भुवि लब्ध्वा पारलिप्सुः पयोधेः ॥ १ ॥

नवसु च बत भूमन्! भक्तिमार्गेष्वथाद्यां
तव गुणगणलीलाकर्णनाख्यां तु भक्तिम् ।
श्रमलवरहितां तां चेतसः शान्तिदात्रीं
कथयितुमयि किञ्चित् प्रारभे भूरमेश! ॥ २ ॥

इह हि जगति सन्ति प्राप्तये त्वत्कृपाया
मुरमथन! बहून्येवाङ्ग! वर्त्मानि नूनम् ।
तदिदमखिलमुच्चैर्दुष्करं हन्त साध्या
[2]सुखमखिललोकैर्भक्तिरेकैव सा ते ॥ ३ ॥

शमयति भुवि पापान्येव संसारभाजां
न तु सुदृढतरां तां वासनां [3]वर्त्म सर्वम् ।

---

१. उडुपेन सागरतितीर्षूपमया भक्तिमार्गकथनरूपाशक्यकार्यप्रवृत्तस्यात्मनो लोके परिहसनीयत्वं द्योत्यते. २. साधनक्रियाविशेषणमिदम्. ३. सर्वं वर्त्म भक्तिमार्गातिरिक्तं मार्गजातम्.

हरति तदुभयं[1] यद्भक्तिरव्याहता त्व-
य्यथ सकलजनार्ध्या सैव निर्धूतशङ्कम् ॥ ४ ॥

अपि च परमवेश्यः कर्मणां चेतरेषा-
मिह भुवि सकलानां चाधिकारी मुरारे! ।
सैमम[2]खिलजनैरप्यश्रमेणाच्युतानु-
ष्ठितिषु किमिह शक्यं भक्तिवत् त्वय्यनन्ते ॥ ५ ॥

निखिलभुवनबन्धो! नाथ! तत्रापि मुख्यं
तव चरितसुधायाः शश्वदाकर्णनं[3] तत् ।
यैदिह परमनि[4]र्च्छन्नप्यसौ हन्त देही
जगति भवति यस्माद् दूरितः सर्वपापैः ॥ ६ ॥

प्रियमिह रसनाया यन्न तद्रोगशान्त्यै
प्रभवति गदहारि स्वादुतां वा न धत्ते ।
प्रणुदति भुवि पापं रञ्जयन्ती हृदुच्चै-
स्तव चरितसुधा सा भेषजायेव दुग्धम् ॥ ७ ॥

तव चरितसुधाया धारया पूरणीये
सति सकलजनौघाः कर्णकूपे स्वकीये ।
तदहितकरणायेवोपलाभ्यां पिधानं
दधति भुवि किमर्थं कुण्डलाह्वायुताभ्याम् ॥ ८ ॥

विषयमयदवाग्निज्वालया पीडिताना-
मँगणित[5]बलकामक्रोधवैर्यर्दितानाम् ।

---

१. पापतद्वासनाद्वयम्. २. अविशेषेणेत्यर्थः. ३. आकर्णनम्. ४. अनिच्छया कुर्वन्नपीत्यर्थः. ५. अगणितबलौ यौ कामक्रोधावेव वैरिणौ ताभ्यामर्दितानाम्.

जननमरणरूपे सागरे मज्जतां हा
　गतिरिह हि विना का त्वत्कथास्वादभाग्यात् ॥ ९ ॥

परिहरति च पापं हन्त तापत्रयं च
　प्रदिशति भुवि सर्वं वाञ्छितं मानवानाम् ।
जनयति हृदि भक्तिं श्रीपते! त्वय्यसीमां
　किमिह दिशति सौख्यं नो कथास्वादनं ते ॥ १० ॥

अनुदिनमवगाहैः पुण्यतीर्थेषु यद्वै
　फलमलमुपभुङ्क्ते यत्तपोभिर्मखैर्वा ।
तदखिलमिह लोकस्त्वश्रमेणाश्नुतेऽसौ
　सकृदपि तव गाथां कर्णयोराकलय्य ॥ ११ ॥

स्मरणनिरतपापव्यूहविच्छेदशौण्ड-
　स्त्वमयि भुवनबन्धो! कीर्त्यसे यत्र[1] शश्वत् ।
श्रवणपुटयुगल्या तां समास्वाद्य गाथां
　क इह न कृतकृत्यो जायते नाथ! मर्त्यः ॥ १२ ॥

जगति दनुजवैरिन्! यः पुमानात्तमोदं
　भवति[2] धृतरतीनां सज्जनानां समाजे ।
निशमयति न गाथां कीर्त्यमानां त्वदीयां
　न भवति बधिरो वै तत्समो हन्त नूनम् ॥ १३ ॥

अनिशमलमनर्थौघावहासत्प्रसङ्गान्
　निशमयति कथां ते प्रोज्झ्य हा मन्दभाग्यः ।
सुमधुरिम[3] बलादप्यर्पितं नाम हित्वा
　पय इह परिखादत्युष्ट्रकः कण्टकान् द्राक् ॥ १४ ॥

---

१. गाथायाम्.　२. त्वयि.　३. शोभनो मधुरिमा यस्य तत्.

अहह खलजनानां कर्णशूलायितैस्तैः
परुषवचनजातैर्विक्षतं कर्णरन्ध्रम् ।
यदि न हि तव गाथारूपपीयूषवृष्ट्या
शिशिरयति विगर्ह्यः कः परः स्यात् ततोऽपि ॥ १५ ॥

नवरसपरिमिश्रैर्या त्वदीयापदानै-
र्नवनवमथ मोदं मानवानां विधत्ते ।
दिनमनु तव गाथां तादृशीं साधु शृण्व-
न्नपि ननु भुवि तृप्तिं कः प्रयातो मनीषी ॥ १६ ॥

शुकभृगुसनकाद्या हन्त नैर्गुण्यसक्ता
अपि जगति मुनीन्द्रा नाथ! यस्यां कथायाम् ।
तव परमनुरक्तास्तूत्तमश्लोकलीला-
विवशितमतयोऽमी केन वाञ्छया न सा स्यात् ॥ १७ ॥

धनतनयकलत्रागारबन्धून् निरस्या-
पि च तृणवदरण्ये मौनिवृत्तिं श्रितानाम् ।
विगलितममताहन्तादिदोषव्रजाना-
मपि जनयति सक्तिं सा कथाधोरणी ते ॥ १८ ॥

अखिलविषयजालावाङ्मुखा ये त्वजस्रं
श्रुतियुगसुखदाभिस्तावकीभिः कथाभिः ।
मुरमथन! नयन्ते कालमामोदभूम्ना
परमसुकृतिनोऽमून् नाथ! मन्यामहे तान् ॥ १९ ॥

---

१. इदं परुषवचनजातैरित्यनेनान्वेति. २. अन्यः. ३. अत्यर्थम्. ४. काम्या. ५. ममता ममेदमित्यभिमानः. अहन्ताहङ्कारः.

तवगुणगणलीलाकीर्तनेषु प्रसक्ते-
ष्वथ विगलितदेहादिस्मृतिर्वीतलज्जः ।
हसति लपति गायत्युच्चकैः किञ्च नृत्य-
त्यलमाजित! बतोन्मादीव हा लोकबाह्यः ॥ २० ॥

अमरपरिवृढत्वं वा [1]रसायाः पतित्वं
कमलभवपदं वा योगसिद्धीश्च बह्वीः ।
तृणमिव हृदि मत्वा त्वत्कथायामजस्रं
मुरमथन! रमन्ते साधवस्तद्रसज्ञाः ॥ २१ ॥

भवति हि भुवि सक्तिर्लौकिकेष्वत्र पुंसा-
[2]मपि परमखिलानां भोगिशायिन्! रसेषु ।
अमितसुकृतपुञ्जैरेव चालौकिके वै
[3]कुतुकमिह रसे त्वद्भक्तिरूपे [4]समीयात् ॥ २२ ॥

जगति भवति विश्वेषां रसानां समूहः
सुनियतमतितुच्छो यद्रसापेक्षयाहो ।
तमिह रसमवाप्तुं भक्तिसंज्ञं निपीया-
च्युत! चरितसुधां ते कः पटुः स्तोकपुण्यः ॥ २३ ॥

यदि न वहति सर्वेभ्यो [5]वरीयस्तरत्वं
मुरमथन! रसेभ्यो भक्तिसंज्ञो रसोऽसौ ।
जहुरहह किमर्थं लिप्सया तस्य भूपा
धनमपि ननु राष्ट्रं चाथ भोगान् समस्तान् ॥ २४ ॥

---

१. भूमेः. २. अस्य अखिलामित्यनेन सम्बन्धः. ३. अभिलाषः. ४. उपनमेत्. ५. अतिशयेन उरुत्वम्. भूयस्तरशब्दवच्च वरीयस्तरशब्दो बोध्यः.

वरद! जनपदे वा यत्र सङ्कीर्त्यते ते
ननु चरितसुधा सा सादरं प्रत्यगारम्।
नरपतिरपि तत्रत्यः प्रजाश्चाथ सर्वाः
सुनियतमनुभावात् पाविताः स्युर्हि तस्याः ॥ २५ ॥

अपि च भुवि पुमान् यः कारयत्युच्चकैस्ते
मुरमथन! कथायाः कीर्तनं स्वीयगेहे।
निजपतिगुणलीलास्वादतुष्टाथ पद्मा
तमिह बत विधत्ते सर्वसम्पत्समृद्धम् ॥ २६ ॥

बहुभिरिह तपोभिर्वर्ष्मणः क्लेशसाध्यै-
रपि बत पुरुषार्था येऽनवाप्या इमेऽपि।
दृढमिह वशगाः स्युर्लब्धभक्तेस्त्वयीशे
किमुत भुवनबन्धो! सम्पदश्चञ्चलास्ताः ॥ २७ ॥

अघशमन! तथापि त्वत्पदे लब्धभक्ति-
स्तृणमिव मनुते यत् सम्पदश्चाश्रमाप्ताः।
तदिह न खलु चित्रं प्राप्य रत्नं त्वनर्घं
क इव जगति काचं चेतनः श्रद्दधीत ॥ २८ ॥

द्रढयति ननु भक्तिं तां जनानां कथा ते
तव गुणगणलीलाभिर्जगन्मङ्गलाभिः।
मधुररसविमिश्रं भेषजं बालकानां
कलयति गदशान्तिं यद्वदीशाश्रमेण ॥ २९ ॥

तत इह ननु मर्त्यैः सर्वथा सर्वकाले-
ष्वपि भवमयासिन्धोः पारमाप्तुं सयत्नैः।

---

१. आद्रियेतेत्यर्थः.

तवं चरितसुधैवात्यन्तमास्वादनीया
निखिलविषयजालावाङ्मुखैः सान्द्रमोदम् ॥ ३० ॥

[1]मुरमथन! [2]तदर्थं तावकेष्वालयेषु
प्रतिदिनमथवाहो गेहसीम्नि स्वकीये ।
त्वयि रतहृदयेनेशेह भूमीसुरेणा-
च्युत! पठनमघघ्नं कारयेत् त्वत्कथायाः ॥ ३१ ॥

सुरभिलसुमवृन्दैश्चाथ दीपैरनर्घै-
रपि परमुपहारैश्चाथ नानाप्रकारैः ।
मनसि सुदृढभक्त्या नाथ! वर्यां सपर्यां
सविनयमतिवेलं कारयेत् [3]पुस्तकस्य ॥ ३२ ॥

प्रतिदिनमपि दद्याच्छाकसूपादिमिश्रं
पुरुदधिघृतदुग्धं तण्डुलं चाथ [4]तस्मै ।
तव चरितसुधाया धारया श्रोतृकर्णा-
नजित! ननु पुनानायादरेण द्विजाय ॥ ३३ ॥

अपि [5]भवदवतारप्रष्ठदिव्यप्रसङ्गे-
ष्वजित! विरतिषूच्चैः स्कन्धकाध्याययोर्वा ।
मुरहर! सविशेषं कारयेन्[6]मण्डनानि
प्रचुरकदलिकाभिः पुष्पमालागणैश्च ॥ ३४ ॥

---

१. भगवत्कथाग्रन्थो यत्र येन यथा पठनीयः, ग्रन्थस्य पठिता पठनकारयिता श्रोता च यद्गुणक इष्यते, तदेतत् सर्वं सपरिकरमस्मात् पद्यात् प्रभृति पञ्चत्रिंशता पद्यैः प्रतिपाद्यते. २. भवसिन्धुपारप्राप्त्यर्थम्. ३. त्वच्चरितपरस्य भागवतादिग्रन्थस्य. ४. सपर्याकर्त्रे. ५. भवदवतारप्रष्ठा भवदवतारमुख्या ये दिव्याः प्रशस्ताः प्रसङ्गा वाचनपर्यायप्राप्ताः प्रघट्टकास्तेषु. ६. अलङ्कारान्. त्वच्चरितपठनधिष्ण्यस्य.

तदनु परिसमाप्तौ त्वत्कथाकीर्तनस्य
प्रमुदितमतिरुच्चैर्भूसुराणां शुचीनाम् ।
भुजगशयन! कुर्यात् तृप्तिमन्नेन तावत्
सुरुचिभिरुपदंशैरन्वितेनादरेण ॥ ३५ ॥

द्विजमपि तव गाथावाचकं पूजयित्वा
मलयजसुममाल्यैरर्घ्यपाद्यैश्च भक्त्या ।
मुदितमजित! कुर्वंस्तं नमेद् दक्षिणाभि-
र्वसनवरदुकूलैर्वित्तशाठ्यं[2] विनैव ॥ ३६ ॥

द्विजवर! वदनात् ते निस्सृतामद्य गाथां
मुरमथितुरिहाकर्ण्यास्मि जातः कृतार्थः ।
इति मधुरवचोभिः प्रीणयेच्चैनमुच्चैः
सविनयमथ वीतच्छद्मलेशं शुभार्थी ॥ ३७ ॥

[3]तदनु विरचयंस्तं साधुयानाधिरूढं
द्विजमयि तव गाथावादिनं प्रीतिपूर्वम् ।
विमलनिगमघोषेणाथ वादित्रनादै-
रपि सममसुमाशु प्रेषयेदस्य गेहम् ॥ ३८ ॥

भवति निगमविद्याग्रेसरोऽथ द्विजन्मा
विजयमथ नरेन्द्रश्चाप्नुयाद्युद्धभूमौ ।
द्रविणममितमाप्नोतीह वैश्यश्च भक्त्या
तव चरितमिहाकर्ण्याशु शूद्रोऽपि सौख्यम् ॥ ३९ ॥

१. शोभना रुचिर्भोक्तॄणां येषु तैः. २. धनलोभमित्यर्थः. ३. सुरभिलसुमेत्यादिभिरेतदन्तैः श्लोकैः प्रतिपादितः पुस्तकतत्पठितृपूजाक्रमो वञ्चिमहाराजैरद्यापि प्रायेणानुवर्त्यते. ४. यानं शिविकादि.

इति सकृदपि यो वा नाथ! मर्त्यः कथां ते
निशमयति हृदम्भोजोल्लसद्भक्तिभूमा ।
स इह सकलवन्द्यो दूरितः सर्वपापै-
स्तव दयिततमश्च स्यादलं वीतशङ्कम् ॥ ४० ॥

यदि न भवति शक्तः कर्तुमेवं कथायाः
श्रवणमयि धनस्याभावतस्तर्हि मर्त्यः ।
मुरहर! परमुच्चैर्हन्त यत्नेन गत्वा
सदसि ननु सतां तां शश्वदाकर्णयेत ॥ ४१ ॥

अनुदिनमिह यावच्छक्ति पुष्पं फलं वा
सकुतुकमुपहारं कल्पयन् पुस्तकाय ।
स्फुरदुरुतरभक्त्या नातिदूरे च तिष्ठन्
मुकुलितकरयुग्मः स्यात् कथाकर्णनार्थी ॥ ४२ ॥

तुरगवदतिलोलं स्वं प्रकृत्यैव चेतो
वशमलमुपनेतुं ज्ञानभाजाप्यशक्यम् ।
विषयविपिनमार्गात् सन्निवर्त्यातिवेलं
चरितानिशमने ते सक्तमुच्चैर्विदध्यात् ॥ ४३ ॥

पुनरतिविफलाभिः कण्ठशोषैकदाभि-
र्मुरहर! तव गाथाकर्णनाय प्रवृत्तः ।
न हि किमपि नयेत व्यर्थमेवात्र कालं
हहह कलुषवार्ताभिः परं लौकिकीभिः ॥ ४४ ॥

यदुदितमिह गाथावाचकेन द्विजेन
स्फुरदुरुतरभक्त्या तत् सदोपाददीत ।

१. आयत्तत्वम्. २. ईषदपि.

शमलशमनदक्षत्वत्कथावादिनं तं
गुरुरयमिति सम्यङ् मानसे भावयेत ॥ ४५ ॥

प्रकटयितुमपि स्वं शास्त्रवैदुष्यमद्धा
सदसि समुपविष्टे माधव! श्रोतृवृन्दे ।
न च किमपि विदध्याच्छुष्कवादं कथाया
मुरहर! कथयित्रा न्यूनविद्येन वापि ॥ ४६ ॥

अपि च मनुजबुद्ध्या यस्त्ववज्ञां विधत्ते
भवति भवपरीतापौघविच्छेदशौण्डे ।
बहुषु विरचितास्तास्तेऽवतारेषु लीला
मुरमथन! निशम्य द्रागसौ नारकः स्यात् ॥ ४७ ॥

तत इह निखिलेशः श्रीहरिः शिष्टदुष्टा-
वननिहतिविधानायावतीर्णो धरण्याम् ।
इति दृढतरभक्त्या नाथ! तुष्येत् कथायां
तव तु विगलदश्रुश्चाथ रोमाञ्चिताङ्गः ॥ ४८ ॥

प्रकटितमयि भक्तेष्वन्वहं तेषु तेषु
स्फुटमशरणबन्धो! ते दयालुत्वमुच्चैः ।
श्रवणयुगलपात्र्या सम्यगास्वाद्य भक्तिं
भवति निरुपाधिं द्राग् विश्वमूर्तौ विदध्यात् ॥४९ ॥

अपि परमितरेभ्यो वर्णयंस्ताः कथास्ते
जगदघहतिदक्षाः साधु कालं नयेत ।
इति तव तु कथायामेव सक्तोऽत्र मर्त्यो
विगलितविचिकित्सं मोदमाप्नोत्यनन्तम् ॥ ५० ॥

---

१. त्वयि. २. नरकसम्बन्धी.

अथ कथयितुमद्य प्रारभेऽहं गुणानां
समुदयमुचितं हि श्रीपते! श्रोतृवक्त्रोः।
तव नतजनबन्धोर्नाथ! कारुण्यलेशा-
दिह निखिलजनानां ज्ञानदानप्रवीणात् ॥ ५१ ॥

यदि न भवति साम्यं श्रोतृवक्त्रोर्गुणानां
भवति न रसलब्धिस्तर्हि पाठे श्रुतौ वा ।
अजित! तत इहेष्टौ तौ समानौ गुणेन
त्वयि विधृतमनस्कौ त्वत्कथास्वादलोलौ ॥ ५२ ॥

इह हि जगति वक्ता ते कथायास्तु भूया-
दघशमनपराया नातिनीचोच्चशब्दः ।
न च वरद! विलुब्धो नाप्यसूयादिदुष्टो
न च पुनरलसो वा नाप्यहो क्रोधशाली ॥ ५३ ॥

न च भवितुमिहार्हत्येष योषाजितात्मा
न च विगततमोभिः साधुभिर्वैरकारी ।
न च मदकलुषीभूताशयो नाप्यदान्तो
न च कुटिलमतिर्वा नो नृशंसश्च जातु ॥ ५४ ॥

विरहित इह दोषैरीदृशैरीश! वक्ता
त्वयि दृढतमभक्त्या दूरिताशेषपापः ।
सुजनसदसि मोदादेत्य दिव्यासनस्थ-
स्तव महितकथायाः प्रारभेताङ्ग! पाठम् ॥ ५५ ॥

मधुमथन! तथैवाद्यन्तानिष्ठं तु पद्यं
वरद! तव कथायां स्कन्धकाध्याययोर्वै ।

---

१. श्रोतुश्च वक्तुश्चानुरूपम्.

सकुतुकमिह देव! द्विः पठेत् सोऽथवा त्रिः
प्रणतिमथ विदध्यात् प्रच्छकः श्रावकश्च ॥ ५६ ॥

अजित! गुणसमूहैरीदृशैरेव[2] युक्त-
स्त्वयि रतहृदमानी[3] माधवाहेतुवादी ।
वरद! तव कथायाः[1] सारसंक्षेपदक्षो
भवति जगति मर्त्यः श्रोतृमुख्योऽत्र नूनम् ॥ ५७ ॥

य इह भवति वक्ता सात्त्विकः स प्रशस्तो
दनुजमथन! मध्यो राजसस्तामसोऽन्त्यः ।
भवति ननु विभागः श्रोतुरप्येवमेव
त्रिदशनुत! गुणानां भेदतस्तु त्रयाणाम् ॥ ५८ ॥

य इह जगति कृत्स्नं त्वत्कथायाः किलार्थं
स्वररसभरभावैरन्वितं सम्प्रकाश्य ।
स्फुटमहह सभायां श्रावयेद् वीतशङ्कं
स भवति किल मर्त्यः सात्त्विको नाथ! वक्ता ॥ ५९ ॥

अपि सकलमजानंस्त्वत्कथायाः किलार्थं
स्फुटमधिकमनोज्ञेनान्वितं च स्वरेण ।
सदसि सकुतुकं यः श्रावयेदत्र मर्त्यः
स भवति ननु वक्ता राजसो वारिजाक्ष! ॥ ६० ॥

तव चरितसुधाया यस्त्विहाबुध्यमानः
किमपि सरसमर्थं निर्भरज्ञानहेतुम् ।
विरहितरसलेशं चास्फुटं श्रावयेद् वै
स भवति भुवि वक्ता तामसश्चाधमश्च ॥ ६१ ॥

---

१. कथावक्ता. २. वक्तुरुक्तैः. ३. सक्तमनाः.

मनसि सुदृढभक्त्या सर्वकर्माणि हित्वा
परिलसदुरुमोदं यः पुमानार्त्तबन्धो! ।
निशमयति कथां ते दक्षिणां चेह दत्वा
विधिवदजित! स श्रोता स्मृतः सात्त्विकोऽसौ ॥ ६२ ॥

पुनरजित! समोदं यः प्रसङ्गाच्छृणोति
प्रविततभवबाधाहारिणीं तां कथां ते ।
तनुमपि च ददानो दक्षिणां वाचकाय
स्मृत इह भुवि स श्रोता भृशं राजसोऽसौ ॥ ६३ ॥

विरहित इह भक्त्या कौतुकेनापि यो वा
निशमयति कथां ते हेतुवाद्यर्थगर्ही ।
अलसमतिरपीश! क्रोधनो दक्षिणां वा
दिशति भुवि न वा श्रोता भवेत् तामसोऽसौ ॥ ६४ ॥

अयमधमतमोऽपि श्रोतृषु त्वत्कथायाः
फलमिह भुवि किञ्चित् प्राप्नुयात् तेऽनुभावात् ।
कलशजलधितीरं संश्रितो दुग्धबिन्दोः
कणमपि न किमाप्नोतीश! लोके खलोऽपि ॥ ६५ ॥

[2]मुरमथन! पुराणानीह सन्त्येव युष्म-
न्नवगुणगणलीलावर्णनैर्भासितानि ।
जगति जयति तत्राप्यस्तपापं तु तद्भा-
गवतमिह पुराणं यत् [3]त्वयैव प्रणीतम् ॥ ६६ ॥

---

१. निशमनक्रियाविशेषणमिदम्. २. इत आ शतकान्ताद् भागवतपुराणस्य महिमोपश्लोक्यते. ३. व्यासरूपेणेत्यर्थः,

अमरविटपिनो वै वेदरूपस्य दिव्यं
फलमिह शुकवक्त्रान्निस्सृतं तद् रसार्द्रम् ।
श्रुतिपुटयुगलेन स्वैरमास्वाद्य तद्भा-
गवतमयमजस्रं के न तुष्यन्ति सन्तः ॥ ६७ ॥

इह जगति बहून्येवाङ्ग! शास्त्राणि सन्ति
स्फुटमहह विवादस्थानभूतानि किं तैः ।
भवति भुवनबन्धौ भक्तिमाप्तुं विना भा-
गवतमिह हि शास्त्रं स्यात् किमन्यत् समर्थम् ॥ ६८ ॥

अपिच जगति ये नामान्यशास्त्रेण तद्भा-
गवतमिह हि शास्त्रं मन्वते हन्त तुल्यम् ।
विगलितविचिकित्सं दैवमेवैषु[1] भूयाद्[2]
विमुखमतिघनाज्ञानान्धकारावृतेषु ॥ ६९ ॥

प्रचुरदुरितपङ्केनाविलेऽस्मिन् कलौ भा-
गवतमिह यदि स्यान्नो सतां तापहारी ।
गतिरथ भुवि पुंसां का भवेन्नष्टदृष्टे-
रिव वनभुवि रात्रौ रिक्तसार्थस्य सद्यः ॥ ७० ॥

असुलभमिह यत्नान्मर्त्यजन्माधिगम्या-
प्यजित! जगति ये वा मानवाः पापभाजः ।
दिवसमिह नयन्त्यास्वादलेशं विना भा-
गवतमयसुधायास्तज्जनिर्हा वृथैव ॥ ७१ ॥

यदिह भुवि जनानां वाञ्छितं देव! कृत्स्नं
दिशति च दृढभक्तिं त्वय्यशेषाधिनाथे ।

---

१. त्वयि. २. भवनं कविराशास्ते मन्वानानामाक्रोशार्थम्.

तदयि बत विनिन्दन्त्यत्र ये वा पुनर्भा-
गवतमहह हेया दूरतस्ते विशङ्कम् ॥ ७२ ॥

त्रिदिवभुवि यथा वा निर्जराणां महेन्द्रो
नभसि ननु यथा वा तारकाणां हिमांशुः ।
सुरसरिदपि यद्वन्निम्नगानां तथा भा-
गवतमपि पुराणानां निकामं वरेण्यम् ॥ ७३ ॥

सुरभिरपि[1] च यद्वद् विश्वमूर्ते! पशूनां
मुरमथन! तिथीनां यद्वदेकादशी च ।
श्रुतिमय[2] इह यद्वत् पक्षभाजां सुपर्णो
भवति ननु पुराणानां तथेदं वरेण्यम् ॥ ७४ ॥

सकलनिगमवेदान्तागमेष्वद्वितीयो-
ऽप्यविहतधिषणो वा सर्वशास्त्रेषु विद्वान् ।
मनुज इह मुरारे! त्वत्प्रसादं विना भा-
गवतनिहितमर्थं नैव जानाति गूढम् ॥ ७५ ॥

अपिच भुवि पुमांस्तत्पाठगोष्ठ्यां तु यो वा
प्रकटयति विभुत्वं वावलेपं दुरात्मा ।
ध्रुवमिह हि मनुष्यास्तस्य सम्पर्कभाजो-
ऽप्यलमघसमुदायस्यास्पदत्वं व्रजन्ति ॥ ७६ ॥

प्रथम इह तथैवास्य[3] द्वितीयश्च पादौ
भवति ननु तृतीयो वै चतुर्थस्तथोरू ।
स्मृत इह किल नाभिः पञ्चमश्चाथ षष्ठो
हृदयमपि च बाहू सप्तमश्चाष्टमश्च ॥ ७७ ॥

---

१. कामधेनुः. २. वेदमयः. ३. भागवतस्य.

नवम इह तदीयः कण्ठदेशस्तथास्यं
भवति हि दशमोऽस्य त्वत्कलीलारसार्द्रः ।
निटिलतटमपि स्यात् तद्वदेकादशो द्वा-
दश इह हि शिखा स्यात् स्कन्ध ईशास्य शौरे! ॥ ७८ ॥

इति खलु पृथगङ्गैः स्कन्धरूपैस्तु तैर्द्वा-
दशभिरपि समेतोऽयं पुराणावतंसः ।
कृत इह भवतैव व्यासरूपेण भक्तिं
जनयितुमयि पुंसां भूयसे श्रेयसे स्यात् ॥ ७९ ॥

अथ फणिवरशायिन्! साधवो नैव के के
[1]भवति धृतमनस्कास्त्वेतदाकर्ण्य सद्यः ।
हृदि जनितविरागज्ञानभक्तिप्रकर्षा-
स्तव ननु [2]कृपयाप्ता मोदभारं त्वपारम् ॥ ८० ॥

भुजविधृतरथाङ्गेनालमङ्गुष्ठमात्रे-
ण हि ननु भवता द्रौण्यस्त्रतो मातृगर्भे ।
[3]अवित इह पुरा यः [4]सोऽथ जातोऽन्ववायं
भुवनविदितमुच्चैर्मण्डयन् पाण्डवानाम् ॥ ८१ ॥

परित इह [5]वेलन्तं गर्भदेशे भवन्तं
[6]त्वकलयदिति [7]वाहो तत्र दृष्टेन तुल्यः ।
क इति भुवि [8]परीक्षेतेति वा धर्मजस्तं
समतनुत परीक्षित्संज्ञकं साधु पौत्रम् ॥ ८२ ॥

१. त्वयि. २. नैवाप्ता इति सम्बन्धः, किन्तु प्राप्ता एवेत्यर्थः. ३. रक्षितः. ४. परीक्षित्. ५. सञ्चरन्तम्. स्फायादितिवत् परस्मैपदम्. ६. ऐक्षतेत्यर्थः. ७. आहो इति पक्षान्तरे. ८. एवं चोभयथा परीक्षिच्छब्दो व्युत्पादितो भवति 'गर्भे परितश्चरन्तं कृष्णमैक्षत' इति, 'गर्भदृष्टदेवसंवादी क इति भुवि परीक्षेत' इति च.

तदनु ननु विवृद्धं पूर्वपक्षेन्दुवत् तं
वयसि समुचिते प्राप्तेऽथ राज्येऽभिषिक्तम् ।
व्यतनुत हृदि वात्सल्यान्वितश्चाजमीढ-
श्चतुरुदाधिपरीतां सोऽपि भूमिं शशास ॥ ८३ ॥

अथ परमुपयेमे तामिरावत्यभिख्यां
नरपातितिलकोऽसावुत्तरस्येश! पुत्रीम् ।
पुनरिह जनयामासाथ तस्यां तनूजां-
श्चतुर इह मनोज्ञानात्मतुल्यान् मुरारे! ॥ ८४ ॥

नरपतिरपि सोऽयं तं कृपाचार्यमद्धा
निजगुरुमथ कृत्वा जाह्नवीतीरदेशे ।
भवति विधृतचेतास्त्वाजहाराश्वमेध-
त्रितयमलमकामः सर्वसम्पत्समृद्धः ॥ ८५ ॥

तदनु स तु निशम्य स्वीयराज्ये प्रविष्टं
कलिमहह विजेतुं तं विनिश्चित्य बाढम् ।
असिततुरगयुक्तं स्यन्दनं स्वं मृगेन्द्र-
ध्वजयुजमधिरूढो दिग्विजित्यै प्रतस्थे ॥ ८६ ॥

अथ मुरहर! जित्वा मङ्क्षु भद्राश्वकादीन्
बलिमपि[1] जगृहेऽसौ नाथ! तेभ्यो महात्मा ।
अपिच स तु महिम्नो गायकान् वै स्वकेषां[2]
तव च धनसमृद्धान् व्यातनोद् भक्तिशाली ॥ ८७ ॥

इति खलु नरपालो दिग्जयोत्कः स धर्मं
वृषतनुमपि[3] पृथ्वीं देव! गोरूपयुक्ताम् ।

१. करम्. २. पाण्डवानाम्. ३. वृषभरूपम्.

अकरुणमिह पद्भ्यां हन्यमानावपश्य-
न्निर[1]वधि कलिनाहो शूद्ररूपेण दीनौ ॥ ८८ ॥

अभयमथ वचोभिः सान्त्वपूर्वैः स तौ[2]भ्यां
नृपतिरिह वितीर्य श्रीश! हन्तुं कलिं तम् ।
विधृतमतिरसिं द्रागाददे यावदेषो-
ऽच्युत! शरणमुपागात् तावदेतं स भीतः ॥ ८९ ॥

सपदि स शरणप्राप्तावने बद्धदीक्षः
स्ववसतिपदमुच्चैर्याचमानाय तस्मै ।
नृपतिरथ वितीर्य द्यूतहेमाङ्गनाद्यं
पै[3]दमपि गमयामासाशु राष्ट्रान्निजात् तम् ॥ ९० ॥

वृषतनुमपि धर्मं सत्यरूपैकपादं
त्रिभिरहह तपश्शौचानुकम्पामयैस्तैः ।
नृपतिरथ स पादैर्योजयित्वा विधाय
क्षितिमपि गतखेदां पालयामास कृत्स्नाम् ॥ ९१ ॥

तदनु स तु कदाचित् स्वैरमाखेटे[4]सक्तः
करकलितशरासः पर्यटन् काननान्तम् ।
अरुणकिरणतप्तः क्षुत्पिपासाकुलो ह्य-
ङ्गिरस इह महर्षेराश्रमं सञ्जगाम ॥ ९२ ॥

मुनिमहह समाधौ सुस्थितं मीलिताक्षं
नरपतिरथ दृष्ट्वा तत्र तोयं ययाचे ।

---

१. दीधात्वर्थे विशेषणमिदम्. २. पृथ्वीधर्माभ्याम्. ३. वासस्थानमित्यर्थः. ४. मृगयापरः.

स तु भवति परात्मन्! न्यस्तचेतास्तदानीं
किमपि न गिरमेतस्याश्शृणोद् भूमिभर्तुः ॥ ९३ ॥

हृदि समुदितमन्युस्तावदेवैर्ष कोट्या
धनुष इह गतासुं व्यालमस्यांसदेशे ।
नरपतिरपि निक्षिप्याशु यातः पुरीं स्वा-
मवमतमहह स्वं मन्यमानो नितान्तम् ॥ ९४ ॥

तनय इह महर्षेस्तस्य शृङ्गीति नाम्ना
विरचितमपराधं वीक्ष्य राज्ञा स्वताते ।
इत इह दिवसे वै सप्तमे तक्षकोऽमुं
दशतु विनयहीनं चेति कोपाच्छशाप ॥ ९५ ॥

नरपतिरपि शापं तन्निशम्यायमद्धा
धनतनयकलत्रागारराष्ट्रादिषु द्राक् ।
स्फुटमुदितविरागः स्वीयपुत्रे न्यधात् स्वं
धृतसुविमलबोधो राज्यभारं महात्मा ॥ ९६ ॥

अथ नृपतिरसौ प्रायोपवेशातिमिच्छं-
स्तटभुवमभिसम्प्राप्याशु जह्नोः सुतायाः ।
अखिलविषयवाञ्छां दूरतो हन्त हित्वा
न्यवसदयि गुणास्वादैकबद्धस्पृहस्ते ॥ ९७ ॥

तदनु समभिजग्मुस्तत्र विश्वं पुनाना
मुरमथन! मुनीन्द्रा नारदाद्यास्तदानीम् ।
त इह भवति भक्तिं तस्य दृष्ट्वातिमात्रं
प्रमुदितमनसस्तं नाथ! शश्लाघिरेऽलम् ॥ ९८ ॥

---

१. परीक्षित्.

अजित! तदनु तत्रोपागमद् व्यासपुत्रो
झटिति सकलसन्देहापनोदैकदक्षः ।
नृपतिरपि च तस्यैवास्यपङ्केरुहाद्[1] भा-
गवतमिह निपीय प्राप मुक्तिं सुखेन ॥ ९९ ॥

तत इह विपुलाधिव्याधिकल्लोलभाजो
घनतरभवसिन्धोः पारसम्प्राप्तिलोलैः ।
विरहितविषयेच्छालेशमम्भोजनाभा-
च्युत! चरितसुधैवास्वादनीया त्वदीया ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
पञ्चमशतकम् ।

## अथ षष्ठशतकम् ।

अथाहं श्रीभूमीरमण! कथयाम्यद्य किमपि
द्वितीयां त्वन्नाम्नामघशमनसङ्कीर्तनमयीम् ।
मुराराते! भक्तिं तव करुणयैवानतजन-
स्फुटाज्ञानध्वान्तप्रकरहरणैकप्रथितया ॥ १ ॥

अमेयं लोकेऽस्मिन् रसभरमवाप्नोति हि पुमान्
जपाद्येष्वेकस्मिन्नपि[2] वरद! ते नाम्नि कथिते ।
रसाभिज्ञा नाम्नां यदि भवति जिह्वात्र न नृणां
रसज्ञाख्यामन्वर्थयितुमथ[3] शक्ता कथमसौ ॥ २ ॥

१. भागवतस्य मकरन्दरूपत्वं गम्यम्. २. जपहोमादिषु. ३. र-
सज्ञेति नामधेयम्.

फलादीन्यास्वाद्याच्युत! सुमधुराणीह भुवने
समत्वं ह्यध्यस्यत्यथ यदमृतेनैषु मनुजः ।
मुराराते! शार्ङ्गिन्नियमतिशयोक्तिस्तदमृतं
त्वसौ साक्षान्नाम्नां कलयति तवास्वादनवशात् ॥ ३ ॥

रमाजाने! यस्मिन् न हि भवति तृप्तिस्तनुभृतां
तथाभूतं वस्तु त्रिजगति न खल्वस्ति किमपि ।
त्वदीयानां नाम्नां मुरहर! समास्वादनविधौ
मुनीन्द्रा अप्यापुः किमपि न हि तृप्तिं शुकमुखाः ॥ ४ ॥

अघानां विच्छित्त्यै मुरमथन! यत्नं विदधतां
तपोभिः संवीक्ष्य श्रममयि जनानां करुणया ।
त्वयैवायं सन्दर्शित उचितमार्गो ननु सतां
त्वदीयानां नाम्नां सुगम इह सङ्कीर्त्तनमयः ॥ ५ ॥

यथा माता स्वेषामहह गदशान्तिं तनुभुवां
विधातुं भैषज्येन हि सुमधुरेणैव यतते ।
तथा पुंसां पापान्यथ शमयितुं त्वत्प्रकटिते
ह्यहो मार्गे सक्तिं क इह न विदध्यादज! सुधीः ॥ ६ ॥

गुणस्तावन्नैसर्गिक इह मुरारे! मुखरता
रसज्ञायाः पुंसां गलितविचिकित्सं यदि तदा ।
असद्वादेभ्यस्तां कथमपि निवर्त्त्याच्युत! कुतो
भवन्नामासक्तां न हि विदधते हन्त मनुजाः ॥ ७ ॥

रसेभ्यः सर्वेभ्योऽप्ययि बत वरिष्ठे हि मधुरे
रसे जिह्वा प्रीतिं रचयति समस्तस्य जगतः ।

४. इदं वाक्यारम्भे. ५. सुधां मोक्षं च.

सुधाधारातोऽप्यच्युत! सुमधुरे नामपटली-
समास्वादे सक्तिं तव न दधते भाग्यरहिताः ॥ ८ ॥

सहस्राणां नाम्नां ननु जगदघध्वंसनकृतां
क्षणार्धे त्वेकस्मिन्नपि बत गृहीते रसनया।
कृतार्थत्वं प्राप्नोत्यलमिह शरीरी किमु पुन-
र्हरे तेषामेवानुदिनमिह सङ्कीर्तनपरः ॥ ९ ॥

तथा सद्रत्नौघैरपि विजितसप्ताश्वरुचिभिः
कृता कण्ठासक्ता स्रगिह मनुजं भूषयति नो।
यथा माला नाम्नामघशमन! कण्ठाभरणतां
प्रपन्ना ते श्रीमन्निरुपमकृपापूरजलधेः ॥ १० ॥

निदानत्वं प्राप्तैरनुदिनमनर्थस्य वचनै-
र्नयन् सर्वं कालं क्षणमिह भवन्नामकथनात्।
कथं धौताघः स्यादिति मम न सन्देहकणिका
कणो वा[1] कस्तूर्या हरति ननु दुर्गन्धमतुलम् ॥ ११ ॥

स्फुलिङ्गः सूक्ष्मो वा दहति हि यथा तूलनिवहं
परं तीव्रान् रोगान् हरति च यथैवौषधमहो[2]।
यथा ध्वान्तं शान्तिं नयति गुरु बालो दिनमणि-
स्तथा पापव्रातं हरति भुवि नामैकमपि ते ॥ १२ ॥

स वै स्नातस्तीर्थेष्वघशमन! सर्वेषु मनुजः
स यज्ञेष्वद्धा दीक्षित इह हि सर्वेषु विधिवत्।

१. वाशब्दोऽप्यर्थे दृष्टान्ते वा. २. अत्रापि सूक्ष्मपदं विपरिणामेन सम्बध्यते.

यदीये जिह्वाग्रे ननु दनुजवैरिन्ननुदिनं
निरस्ताशेषाघं परिलसति नामैकमपि ते ॥ १३ ॥

अधर्माणां मुख्यास्पदमिति निकामं भुवि सतां
विनिन्दापात्रत्वं परमनुभवन्नप्यथ कलिः ।
प्रसूते सर्वार्थान् वरद! तव नामग्रहणतो
यतो ग्राह्यस्तस्मादजनि जगदाराध्य! नितराम् ॥ १४ ॥

भजन्ते त्वां मर्त्या मुरहर! तपोभिः कृतयुगे
यजन्ते त्रेतायामथ मखवरैर्भूरिफलदैः ।
निषेवन्ते त्वां द्वापर इह हि तन्त्रोक्तविधिना
कलौ नाम्नां सङ्कीर्तनमयि समाश्रित्य सुधियः ॥ १५ ॥

समुद्भूता मर्त्या मुरहर! कृतादिष्वपि युगे-
ष्वहो यस्य प्राप्त्यै जनिमहह वाञ्छन्ति हि कलौ ।
अथास्य त्वन्नामास्वदनमयपुण्यस्य हि तुलां
समारोढुं शौरे! किमिह भुवि वस्तु प्रभवति ॥ १६ ॥

अशक्तानां लोके चरितुमज! कर्माणि विमला-
[1]न्यहो वेदोक्तान्युद्भटदुरितशान्त्यै मधुरिपो! ।
परं शूद्रादीनमपि कुशलदोऽसौ विजयते
स्फुटं नामास्वादस्तव कृपणलोकैकसुहृदः ॥ १७ ॥

अथाध्येतुं वेदान् मुरहर! षडङ्गैरपि युतां-
स्तथाग्निष्टोमादीनपि ननु विधातुं भुवि मखान् ।

---

१. 'कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥' इति भागवतम्.

परं कालो निर्दिष्ट इह हि महद्भिस्तव रमा-
पते! नामास्वादस्त्वज! सकलकालेषु विहितः ॥ १८ ॥

अभुक्त्वा भुक्त्वा वा फणिशयन! संस्नाय विधिवत्
त्वथास्नात्वा तिष्ठन्नुत ननु शयानोऽप्यथ नरः ।
मुरारे! गृह्णीयात् त्रिभुवनगताघौघशमने
सुनिष्णातं नाम्नां समुदयमशङ्कं तव भृशम् ॥ १९ ॥

सलीलं सल्लापादिषु च सवयस्कैरपि जनै-
स्तथैवैकान्ते वा सदसि [1]गमनायानसमये ।
सुधाधारासारस्मयभरनिरासैकनिपुणं
हरे! नामोच्चार्यं तव रहितसन्देहमनिशम् ॥ २० ॥

अबुद्ध्या देवानुष्ठितमिह हि कर्मैकमपि न
व्रजेदम्भोजाक्ष! त्रिजगति च साफल्यममलम् ।
भवन्नामास्वादस्त्वथ पुनरबुद्ध्यापि रचितः
फलप्राप्त्यै हेतुर्भवति जगदाराध्य! भविनाम् ॥ २१ ॥

इहाज्ञात्वा ज्ञात्वापिच गुरुरुजा पीडिततनु-
र्यथा मर्त्यो दिव्यौषधमथ समास्वाद्य सहसा ।
भवेन्मुक्तो रोगैर्मुरहर! तथा नामपटली-
समास्वादस्त्वत्को दिशति [2]शमबुद्ध्यापि रचितः ॥ २२ ॥

तथा [3]सङ्केतार्थं विशदमपहासार्थमपि वा
पुनर्नर्मोक्त्या वा वरद! तव नामावलिरहो ।

१. गतागतकाले. २. शं सुखम्. ३. 'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥' (भाग. ६. २.)

गृहीता मर्त्यानामपहरति पापं किमु पुन-
मैनस्स्फूर्जद्भक्त्या भुजगवरशायिन्! निगदिता ॥ २३ ॥

मुरारे! यत्नेनाप्यहह महता हि त्वदितरान्
सुरानाराध्यायं भवति विफलोद्योग इह वै ।
मनुष्यस्त्वं तु श्रीरमण! निजानिन्दापरगिरा-
मपि स्फीतं श्रेयो दिशसि[1] करुणाभारजलधे! ॥ २४ ॥

अशाम्यद्रोगाधिप्रसभशिथिलीभूतहृदयो
वियुक्तो हन्त स्वैरपि खलु सुहृद्भिश्च विजने ।
वने तिष्ठन् मर्त्यः सकृदपि भवन्नाम कलयन्
भवेन्मुक्तो नूनं सकलकदनैः पूर्वमुदितैः ॥ २५ ॥

सपत्नैरत्युग्रायुधपरिलसद्बाहुभिरलम्
परीतो वा युद्धाङ्गणभुवि सहायैर्विरहितः ।
पुनश्चोरैर्व्याघ्रादिभिरपि तथाभिद्रुत इहा-
लपंस्ते नामानि व्रजति मनुजो नैव विपदम् ॥ २६ ॥

तथा राज्ञा प्रोद्यन्निरवधिकरोषान्धमनसा
निहन्तुं चाज्ञप्तोऽप्युरुभयदकारागृहगतः ।
अपारे मज्जन्त्यामपिच जलधौ नावि तरसा
जपंस्ते नामान्यच्युत! शुचमवाप्नोति न पुमान् ॥ २७ ॥

सपुत्रः पुत्रार्थी भवति नरपालोऽतिमहित-
स्तथा राष्ट्रार्थी माधव! ननु सुखार्थी सुखयुतः ।
यशस्वी तल्लिप्सुर्भवति सुकृतेच्छुश्च सुकृती
न किं किं वा दद्याच्छुभमहह ते नाममहिमा ॥ २८ ॥

१. तथा च त्वामनुपासीनो मनुष्यो मूढ इति तात्पर्यम्.

प्रभावेन श्रीमन्नपिच तव नाम्नामिह नरो
दरिद्रोऽपि स्याद् यक्षपति[1]सदृशैश्वर्यनिलयः ।
तथा मन्दप्रज्ञोऽपिच भवति वाचस्पतिसमो
मुरारे! किं प्राप्यं कुशलमिह मर्त्यैः परमितः ॥ २९ ॥

बहूक्त्या किं संमोचयितुमिह लोके जनममुं
विपद्भ्यः सर्वाभ्यस्त्वपिच कुशलं दातुमतुलम् ।
न दक्षस्त्वन्नामामृतरससमास्वादनसुखात्
परो मार्गो यत् तन्मतिरिह विधेया हि सकलैः ॥ ३०॥

समस्तापद्दूरीकरणपटुतैकाधिवसतिं
तथा सीमातीतप्रचुरसुखविश्राणनपराम् ।
इमां त्वन्नामालीमयनवसुधासान्द्रलहरीं
कथं शक्नोत्यास्वादयितुमवनौ भाग्यरहितः ॥ ३१ ॥

रसज्ञायास्तृप्तिं दिनमनु सुधांशोरयि हरे!
करेभ्यश्च्योतन्त्या दिवि विरचयन्तोऽपि सुधया ।
अमर्त्यास्त्वन्नामास्वदननिरतेष्वीश! दधते
यदीर्ष्यां तत्तुल्यं[2] किमिह तदहो सर्वसुखदम् ॥ ३२ ॥

सुखावाप्तिर्लोके न भवति विनैव श्रमलवं
जनानामित्यास्तां वरद! भुवि वार्त्ता मधुरिपो! ।
सुखेनैवावाप्तुं सुखमयि मनोवागविषयं
पटुर्मार्गो राजत्ययमिह भवत्कीर्त्तनमयः ॥ ३३ ॥

अटन् स्नातुं तीर्थेष्वखिलदुरितध्वंसिषु नरो
व्रतैर्वा भूयोभिः परमकठिनैः कर्शिततनुः ।

---

१. यक्षपतिः कुबेरः. २. त्वन्नामास्वादनतुल्यम्.

सुखं यद्वै भुङ्क्ते तदिह हि विनैव श्रमलवं
भवन्नामास्वादे निरतहृदयो हन्त लभते ॥ ३४

अकाराद्यैर्वर्णैः परिणतशरीरा सुविमला
गिरां देवी भर्त्री कमलजनुषा सत्यभुवने ।
स्थिता सार्धं पद्मासनभुवि तथा नो सकुतुका
यथा त्वन्नामत्वं विबुधरसनाग्रेषु गमिता ॥ ३५ ॥

यथा चेतोरम्यं वहति ननु माधुर्यमाधिकं
[1]समत्वं सर्वत्रापि च वरद! खण्डस्य शकलः ।
[2]तथा त्वन्नाम्नामच्युत! ननु सहस्रं मधुरिपो!
मिथः किञ्चोत्कर्षं विगतविचिकित्सं कलयति ॥ ३६ ॥

मुराराते! तेष्वप्यहिशयन! नामस्वयि तव
स्फुटं नामानि द्वादश वरद! मुख्यानि भगवन्! ।
अथैतेषां सङ्कीर्तनधृतरतेर्भाग्यमहिमा
परं [3]पारं वाचां व्रजति न हि कस्यात्र विदुषः ॥ ३७ ॥

अपि श्रीगोपीचन्दनतिलकसन्धारणमहो
भवन्नामान्ये[4]तान्यनवरतमुच्चार्य कलयेत् ।
तथैवार्चायां ते दृढदुरितशान्त्यै निजहृदि
स्फुरद्भक्त्युन्मेषं सरसमुपयुञ्जीत च नरः ॥ ३८ ॥

अथैतेष्वेकं द्वादशसु तव नामस्वयि पुमान्
जपेल्लब्ध्वाचार्यादिह नियमनिष्ठः प्रतिदिनम् ।

---

१. तुल्यास्वादविषयत्वम्. २. माधुर्यं समत्वं च वहतीत्यर्थः. ३. अगोचरम्. ४. द्वादश.

न सङ्ख्यान्यूनत्वं मुरहर! कदापीह रचये-
ज्जपन्नाधिक्येन त्वथ फलमवाप्नोति बहुलम् ॥ ३९ ॥

मुरारे! यो मर्त्यो नियममिममाजन्ममवनौ
दृढं धत्ते भक्त्या भवति करुणापूरजलधौ ।
स वै पूज्यो भूत्वा भुवि दिवि मनुष्यैरपि सुरै-
रपारं प्राप्नोति त्रिभुवनपते! शर्म नियतम् ॥ ४० ॥

वदामि श्रीजाने! किमपि जपमालाथ मनुजै-
र्विधेया कैः कैर्वस्तुभिरिति च संक्षिप्य सहसा ।
फलं चावाप्यं तद्विरचितजपेनापि च पृथग्
यथाशक्त्यद्याहं त्रिभुवनजनस्तुत्यमहिमन्! ॥ ४१ ॥

विधेया शङ्खैर्वा मुरमथन! रौप्येण च पुन-
स्तथा च स्वर्णेनोरगशयन! भो निम्बजफलैः ।
तथा पद्माक्षैर्वा मणिभिरपि वा विद्रुमगणैः
पुनर्मुक्ताभिर्वा वरद! जपमाला हि मनुजैः ॥ ४२ ॥

प्रकुर्यादत्राष्टोत्तरशतमयीं वा ननु पुमान्
जपार्थं मालां ते मधुमथन! नाम्नामघभिदाम् ।
तदर्धं पादं वा पुनरहह कुर्वन्निह ततोऽ-
प्यलं न्यूनां विन्दत्यजित! न फलं तज्जपभवम् ॥ ४३ ॥

जपन्नीशाङ्गुल्या व्रजति फलमेकं पुनरहो
जपन् रेखाभिर्वै भजति हि फलं चाष्टगुणितम् ।
तथाप्नोतीशाच्छस्फटिकमणिभिश्चायुतमहो
पुनर्लक्षं मुक्तामणिभिरपि मर्त्यस्त्वयि रतः ॥ ४४ ॥

---

१. जन्मनः प्रभृति. अनश्च (९–४–१०८) इति टच्.

तथा पद्माक्षैर्वै भजति दशलक्षं पुनरहो
फलं कोटिं हेम्ना वरद! रचितैरीश! मणिभिः ।
अनन्तं वै भुङ्क्ते फलमयि जपन्नीश! तुलसी-
मणिव्रातैर्भक्त्या भुजगशयन! त्वत्प्रियतमैः ॥ ४५ ॥

भवद्भक्ताग्र्यत्वं प्रकटयितुमन्येभ्य इह वै
जनेभ्यो ब्रूते चेदिह हि जपसङ्ख्यां विरचिताम् ।
फलं नो विन्देताच्युत! ननु ततो जातुचिदपि
प्रकाश्या नो कस्मैचिदपि जपसङ्ख्यात्र सुधिया ॥ ४६ ॥

नृणां भुक्तिं मुक्तिं वितरति भवन्नामपटली-
समास्वादो निस्संशयमयि तथाप्यत्र मनुजः ।
अकामं त्वन्नामान्यघशमन! सङ्कीर्त्य भुवने
फलं भुङ्क्तेऽनन्तं तव करुणया कैटभरिपो! ॥ ४७ ॥

मुरारे! त्वन्नामस्वपि च भुवने द्वादशसु तद्-
वरीयः श्रीनारायण इति हि नामाघशमनम् ।
जपन्नेतन्नित्यं प्रणवनतियुक्तं ननु पुमान्
प्रसादेन श्रीमंस्तव सुखमवाप्नोत्यनुपमम् ॥ ४८ ॥

य इत्थं भक्त्या त्वय्यखिलजगदीशेऽनवरतं
नयत्यद्धा कालं वरद! तव नामानि कलयन् ।
यमं वा तद्भृत्यान् प्रतिभयतराकारसहितान्
न पश्येत् स्वप्नेऽपि प्रशमितसमस्ताघनिकरः ॥ ४९ ॥

असद्वृत्तो नीचः शठमतिरतीवालसतम-
स्तथा कामक्रोधाकुलितहृदयो वात्र मनुजः ।

लपन्नन्ते नारायण इति हि नामातिशुभदं
निरस्ताधिव्रातं व्रजति ननु कैवल्यममलम् ॥ ५० ॥

अभूत् कन्याकुब्जे मुरहर! पुराजामिल इति
श्रुतो विप्रः कोऽप्यागमनिगमवित् साधुचरितः ।
वहन् भक्तिं पित्रोरथ समधिकां सुस्थिरमतिः
स्वधर्मे निर्दोषे प्रतिदिनमपि श्रुत्यभिहिते ॥ ५१ ॥

अथ प्राप्ते श्रीमन्! वयसि तु विवाहार्थमुचिते
सवर्णां चागर्ह्यां स पुनरुपयेमे ननु सतीम् ।
तया साकं चाखण्डितमिह[1] वितन्वन् सुरमही-
सुराग्नीनां पूजामनयदथ कालं कमपि सः ॥ ५२ ॥

कदाचिद्यातोऽसौ वनमथ निदेशान्निजपितुः
समानेतुं विप्रो ननु कुशपलाशादि सहसा ।
निवृत्तो नेत्राभ्यामकलयदलज्जां तु कुलटां
ततः काञ्चिन्मूर्तामिव विपदमग्रे पथि निजाम् ॥ ५३ ॥

मदोन्मत्ता धृष्टा मुहुरपि पदन्यासविषये
चलन्ती चाव्यक्तं किमपि निगदन्ती च वचनम् ।
हसन्ती सा चाकारण[2]महह शूद्रेण सहिता
स्वतुल्येनोपान्तं त्वरितमियमापास्य कुलटा ॥ ५४ ॥

विधातुं मग्नं तं कलुषनिरयावर्तकुहरे
गलासज्जत्पाशायितनिजभुजायुग्मलतया ।
समाश्लिष्टः सोऽयं द्विज इह तया धीरमतिर-
प्यशक्तोऽभूत् कामाशुगविवशतां सोढुमामिताम् ॥ ५५ ॥

---

१. विततनक्रियाविशेषणमिदम्. २. अकस्मात्.

ततो भ्रश्यत्तेजाः सकलसुगुणैश्चाथ रहितः
स्वधर्मे वा निष्ठाविरहितमतिः पापवसतिः ।
सतां हेयश्चासीदहह सहसैवैष भुवने
न दुस्सङ्गः कं कं नयति विपदं वा तनुभृतम् ॥ ५६ ॥

अनाथौ जीर्णाङ्गौ सुबहु जरया हन्त पितरौ
समुत्सृज्याकाण्डे सपदि दयितां स्वां च युवतिं ।
महापापिष्ठाया अहह कुलटाया निवे[१]सने
स निन्ये कालं स्वं सततमपि दौवारिक इव ॥ ५७ ॥

वियुज्यन्ते यद्वज्जगति धनहीनस्य शनकैः
सकाशात् पुंसो वै नियतमिह भृत्याश्च सुहृदः ।
तथा विप्रादस्मात् कुटिलकुलटासङ्गमजुषो
गुणाः सर्वे याताः क्रमश इह लोपं विधिवशात् ॥ ५८॥

अथो ध्यायंश्चेतस्यनिशमपि तामेव कुलटां
वियोगं वै तस्याः क्षणमपिच सोढुं ह्यकुशलः ।
हरंस्तस्यै पित्र्यं सकलमपि पापो धनमहो
स तां निन्द्यः सर्वैः सुबहु रमयामास कुमतिम् ॥ ५९ ॥

प्रनष्टे वै पित्र्ये ननु तदनु वित्तेऽथ सकले
स निस्स्वत्वं ज्ञात्वा गमितमहहात्मानमचिरात् ।
पुनर्द्यूतैश्चौर्यादिभिरतितरां गर्हिततमै-
रुपायैः सम्पाद्य द्रविणमथ तस्यै बत ददौ ॥ ६० ॥

स पश्यंस्तामेवानुदिनमिदमीयां गिरमहो
निशम्यातिप्रीतः श्रवणपरुषां हन्त सुधियाम् ।

---

१. गृहे.

समस्तं तत्प्रीत्यै किमिह बहुना कर्म कलयन्
वृथा निन्ये कालं जनिमपि वरिष्ठां ननु निजाम् ॥ ६१ ॥

ततस्तस्यां पुत्रान् दश स जनयामास कुमति-
र्द्विजोऽयं पुंश्चल्यां पुनरहह तेष्वप्ययि विभो! ।
कनिष्ठोऽभून्नारायण इति हि नाम्नाथ दयितः
स्वपित्रोरत्यन्तं प्रचुरतरदुर्मार्गरतयोः ॥ ६२ ॥

हसन्तं बालं तं सततमपि चाव्यक्तवचसा
लपन्तं जानुभ्यां कथमपि चरन्तं भुवि पुनः ।
पतन्तं संवीक्ष्य द्रुतगतिषु खेलन्तमजिरे
कियन्तं न प्राप्तः प्रमदमिह मोहाकुलमतिः ॥ ६३ ॥

अथो लीलासक्तं तमहह निरीक्ष्यातिमुदितो
मुमोचाश्रूण्युच्चैः सह दयितया निश्चलतनुः
अहो सन्त्यज्यैव प्रचुरभवसन्तापशमनीं
स्मृतिं ते योगीन्द्रैरपि मधुरिपो! वाञ्छिततराम् ॥ ३४ ॥

अपश्यन् बालं तं क्षणमपि विषण्णोऽथ नितरां
स पश्यन् भूयोऽपि प्रमुदितमनाः साश्रुनयनः ।
प्रधावन्तं दूरे स्वयमनुदधावातिजरठो-
ऽप्युपादायोत्सङ्गे तमहह निधातुं जडमतिः ॥ ६५ ॥

लुठन् सार्धं तेनैव हि स खलु पङ्काविलतमे
महीदेशे बिभ्रत् तमिह गलदेशेऽपि च मुहुः ।
मनाग् रुष्टेनानेन हि रचितसन्ताडनमुखे-
ष्वथागस्सु प्राप्तः किमपि न हि रोषं स दशमी ॥ ६६ ॥

---

१. वृद्धः.

न भुङ्क्ते मूढात्मा शिशुममुमसम्भोज्य कुहचि-
न्न पानीयं किञ्चित् पिबति स तु तस्मै तददिशन् ।
अहो स्वप्नेऽपि त्वत्स्मृतिमयमहाभाग्यरहितः
स वृद्धः पापैरप्यहह वयसेवाभवदिह ॥ ६७ ॥

अथैवं वै सूनोः कुटिलकुलटागर्भजनुषः
समासक्तोऽसौ लालनभरणकृत्येषु सततम् ।
बताष्टाशीत्यब्दप्रगणितवयस्कोऽपि जडधी-
र्न वेदासन्नं[1] स्मान्तकमहह मोहाकुलमतिः ॥ ६८ ॥

अपश्यत् सम्प्राप्ते हहह मृतिकाले परवशः
सुघोरान् वक्रास्यान् ज्वलदनलतुल्याक्षियुगलान् ।
यमप्रेष्यांस्तु त्रीन् भुजकलितपाशान् स्वमिह वै
समानेतुं प्राप्तान् भृशमकरुणानेष सविधे ॥ ६९ ॥

स भीतो दृष्ट्वा तान् सरभसमुपान्ते ननु जवात्
समायातो[2] बद्धुं स्वमिह बत पाशेन सुदृढम् ।
विदूरे क्रीडन्तं पृथुकमतिदीनः खलु समा-
जुहावाहो नारायणमयमथोच्चैर्विवशधीः ॥ ७० ॥

निशम्याहो देहं स्वकमवशमद्धा विसृजत-
श्च्युतं वक्रान्नामाच्युत! तव तु पीयूषसदृशम् ।
समाजग्मुर्वेगाद् भवदनुचराः पीतवसना
घनाभाश्चत्वारो दरवररथाङ्गान्वितभुजाः ॥ ७१ ॥

विकर्षन्तश्चैनं सुदृढमिह पाशेन सहसा
निबध्याहो दीनं निरुरुधुरमी तान् यमभटान् ।

---

१. वेद स्मेति योज्यम्. २. आगच्छतः.

निरुद्धास्ते सद्यो विधुतविचिकित्सं गिरमिमां
समाचख्युर्दूतान् प्रति तव भृशं विस्मितधियः ॥ ७२ ॥

निषेद्धारः के वा रहितभयमाज्ञां त्रिगजति
प्रभोर्भास्वत्सूनोः सुनियतमधृष्यामहह नः[1] ।
कुतो वाप्यायाताः पुनरिह किमर्थं सुबहु नो
निरोधं निश्शङ्कं कुरुथ वदत क्षिप्रमधुना ॥ ७३ ॥

युवानः के यूयं सजलजलदानीलरुचय-
स्त्वमी सर्वे राजत्तटिदुपमपीताम्बरधराः ।
चतुर्बाहाराजद्दरवररथाङ्गाम्बुजगदा
लसन्मुक्ताहाराः स्मितसुललितास्या वदत नः ॥ ७४ ॥

इति प्रोक्ता दूतास्तव तु यमदूतैः परममून्
प्रहस्येदं वाचा जगदुरतिगम्भीरतरया ।
इह प्राप्ता यूयं यदि भवथ वैवस्वतभटाः
स्वरूपं धर्मस्याप्यथ तदितरस्येह गदत ॥ ७५ ॥

कथं धार्यो दण्डो भवति ननु दण्ड्येष्वथ नरे
ष्विहार[2]स्थानं किं वा समुचितमिहास्या[3]ङ्ग! भुवने ।
नरो दण्ड्यः कृत्वा किमिह जगति स्यादिति च ते
भवद्दूतैः पृष्टा जगदुरलमेतामयि गिरम् ॥ ७६ ॥

श्रुतिप्रोक्तो धर्मः सुनियतमधर्मस्तदितरः
श्रुतिः साक्षान्नारायण इति वयं साधु शृणुमः ।
तपो वेदा यज्ञाः पुनरिह हि धर्मश्च विबुधा-
स्ततः सम्भूता इत्यभिदधुर्ऋषीन्द्राः सुधिषणाः ॥ ७७ ॥

---

१. हृदं प्रभोरित्यनेनान्वेति. २. अविषयः. ३. दण्डस्य.

रविर्वह्निर्गावो मरुदपि नभः सोमदिवसौ
दिशः कालः सन्ध्या स्वयमपिच धर्मस्त्विति परम् ।
मतास्त्वेते वै साक्षिण इति हि धर्मस्य भुवने
गुहायां न्यस्तस्येव हि सुबहु गूढस्य मुनिभिः ॥ ७८ ॥

अधर्मो विज्ञातो जगति पर[1]मेतैर्ननु भव-
त्यपि स्थानं दण्डस्य च समुचितं नीतिनिपुणैः ।
नरः पापं यो यादृशमिह विधत्ते स तु पुनः
परत्राथो दण्डं सपदि लभते तादृशमहो ॥ ७९ ॥

अयं विप्रः पूर्वं क्वचन दिवसे तातवचनाद्
वनं यातः पश्यन्नहह कुलटां कामपि तदा ।
स्मरार्तः स्वं धर्मं सकलमपि सन्त्यज्य विदधे
यतः पाप्मानं तं [2]तदजित! नयामो नु नरकम् ॥ ८० ॥

इति श्रुत्वा वाचं सपदि यमदूतैर्निगदिता-
ममून् प्रत्यूचुस्ते भवदनुचरा नीतिनिपुणाः ।
वचोभिर्वै गर्भीकृतसकलशास्त्रैर्मृदुभिर-
प्यहो गम्भीरार्थैरमलतरधर्मैकानिरतैः ॥ ८१ ॥

अधर्मो हा कष्टं विशति ननु धर्मैकमनसां
सभां वः [3]शास्तॄणां सकलजगतां निर्भयतराम् ।
अदण्ड्येष्वंहोभिर्भुवि विरहितेष्वप्यथ नरे-
ष्वलं दण्डो यद्वै ध्रियत इह निष्कारणमहो ॥ ८२ ॥

---

१. एतैः रविवह्न्यादिभिर्निमित्तभूतैरित्यर्थः. 'एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते. ।' इति भागवतम्. २. तस्मात्. ३. शासितॄणाम्. इडभाव आगमशासनानित्यत्वात्.

प्रजानां शास्तारो भुवि सकलभूतेषु च समाः
परं न्याय्ये मार्गे निहितमतयः साधुचरिताः ।
यदा वैषम्यं तास्वहह रचयन्ति ह्यशरणा-
स्तदा ताः कं लोके शरणमुपगच्छन्तु कृपणाः ॥ ८३ ॥

[1]जगत्यत्र श्रेयान् रचयति पुमान् यद्यदितर-
स्तदेवाहो वाञ्छत्यनिशमविचार्यैव नियतम् ।
प्रमाणं यद्वासौ कलयति तदेवेह मनुजाः
समस्ता निश्शङ्कं परमनुसरन्त्याशु विधिवत् ॥ ८४ ॥

यदङ्के विन्यस्य स्वशिर इह लोकोऽयमकुतो-
भयं निद्रात्यद्धा सततमपि विस्रब्धमुचिते ।
स्वयं धर्माधर्मौ पशुवदविजानन् कथममुं
स वै द्रोग्धुं चार्हत्यकरुणमथात्मैकशरणम् ॥ ८५ ॥

कृता विश्वोत्कृष्टा नियतममुना[2] निष्कृतिरहो
कृतानां पापानामपि परमनन्तासु जनिषु ।
यदुच्चैर्व्याजह्रे परमविवशो [3]नाम जगती-
पतेः पद्माभर्तुर्जगति सकलाघौघशमनम् ॥ ८६ ॥

जगादासौ वेगादसुविगमकाले विवशधी-
श्चतुर्वर्णं [4]नारायणमयमबुध्यापि च यदा ।
तदानीं जाता निष्कृतिरपि निजानां सुमहता-
मघानां सर्वेषां रहिताविशयं हे यमभटाः! ॥ ८७ ॥

---

१. 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' इति भगवद्गीता. २. अजामिलेन. ३. नारायणेति. ४. अस्य विशेष्यमनुवर्तनीयं नाम इति.

सुवर्णस्तेनो वाप्यहह गुरुदारेषु च रत-
स्तथा मित्रद्रोही पितृनृपवधूहिंसनपरः ।
तथान्ये वै पापा जगति ननु सर्वेऽप्यघकुलाद्
भवेयुर्मुक्ताः श्रीरमणशुभनामग्रहणतः ॥ ८८ ॥

तथा नो पूतः स्यान्नर इह तपोभिर्व्रतशतैः
परं तीर्थस्नानादिभिरपि समस्ताघशमनैः ।
यथा पद्माभर्तुर्मधुरतरनामग्रहणत-
स्तदीयानां[1] सेवादिभिरपि भवेत् पावितमः ॥ ८९ ॥

त्रिलोकैकाधीशे निरुपमकृपाभारजलधौ
हरौ भक्त्या हीनेन तु विरचितान्यत्र भुवने ।
फलप्राप्त्यै कर्माण्यहह न भवन्त्येव हि मरौ
यथा बीजावापः कुमतिषु च विद्यावितरणम् ॥ ९० ॥

परं सद्भिर्निन्द्योऽप्यलमतिदुराचारनिलयो-
ऽप्यहो दण्ड्योऽप्यस्मिन् जगति ननु मर्त्यः सकृदपि ।
प्रभोर्लक्ष्मीभर्तुः कथयति हि नामैकमपि य-
द्यसौ शिक्षां नार्हत्यहह न हि सन्देहकणिका ॥ ९१ ॥

अतश्चैनं मा मा नयत नरकं हन्त रचिता-
खिलांहोनिर्वेशं[2] सुनियतमदण्डार्हमधुना ।
पुनः सन्देहश्चेद् वचसि खलु नः स्वं पतिमहो
यमं तत्त्वं धर्मस्य तु सुगहनं पृच्छत भटाः! ॥ ९२ ॥

इति श्रुत्वा वाणीं भवदनुचराणां यमभटा
ययुः प्रष्टुं धर्मं परममथ वैवस्वतममी ।

---

१. पद्माभर्तृभक्तानामित्यर्थः. २. निर्वेश इह निष्कृतिः.

विमुच्यैनं पाशादहह पुरुपीडावहतमाद्
द्विजं सद्यो याम्यात् परमविवशं भूरिजरठम् ॥ ९३ ॥

[1]गुणान्मुक्तोऽप्यद्धा ननु सकलदोषैर्विरहितो
द्विजस्तावत् तं भागवतमिह धर्मं निरुपमम् ।
निशम्योद्यद्भक्तिस्त्वयि परमकारुण्यनिलये
ववन्दे ते दूतान् स्वभयहृतिहेतून् स शिरसा ॥ ९४ ॥

विवक्षुं ज्ञात्वा तं द्विजमिह तदा स्वान् प्रति जवात्
तिरोधानं चक्रुर्मुरहर! भवत्पार्षदवराः ।
ततः स्वीयं पापं सकलमपि सञ्चिन्त्य सहसा
महान्तं निर्वेदं स समुपजगामैवमलघुम् ॥ ९५ ॥

अहो कष्टं वृद्धौ सुबहु पितरौ चाथ दयिता-
मनाथां सन्त्यज्य स्वयमिह सुनीचां तु कुलटाम् ।
समाश्रित्याधर्मे निरतहृदयोऽसौ ननु जनो
ध्रुवं यास्यत्यद्धा ननु नरकमत्यन्तकलुषम् ॥ ९६ ॥

व्यकर्षन् ये बध्वा सुबहु विवशं मां रशनया
घृणावर्जं याताः क्व बत भृशभीमाकृतिजुषः ।
विमुक्तं मां तेभ्यो व्यदधुरिह ये तेऽपि च गताः
क्व वा स्वप्नो वासौ किमिति परमं विस्मयमगात् ॥ ९७ ॥

भृशं पापिष्ठस्याप्यहह मम वक्त्राद् विगलितं
मुरारेर्यन्नाम प्रचुरभवसन्तापशमनम् ।
ततो बन्धं मोक्ष्ये सुदृढमिति निश्चित्य मनसा
ययौ [2]गङ्गाद्वारं सपदि स मुनीन्द्रैः परिवृतम् ॥ ९८ ॥

---

१. विष्णुभक्त्यादिगुणरहितोऽपि. २. हरिद्वारम्.

स्थितो देवागारे कुहचिदिह संवीक्ष्य स तु तान्
भवद्दूतान् नत्वा स्ववपुरधिगङ्गं च विसृजन् ।
अवाप्तो वैकुण्ठं झटिति स विमानेन तु यमो
भवद्भक्त्युद्रेकाद् दृढमथ रुरोधाहह निजान् ॥ ९९ ॥

असद्वृत्तो विप्रस्त्वयमघभृतो[1]ऽजामिल इह
प्रयातः सायुज्यं दृढमहह यत्कीर्तनवशात् ।
तथाभूतानां ते फणिशयन! नाम्नामविरतं
समास्वादे कार्या मतिरखिललोकैः सकुतुकम् ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
षष्ठशतकम् ।

---

## अथ सप्तमशतकम् ।

अम्भोजनाभ! कथयाम्यथ तां तृतीयां
भक्तिं हताखिलमलां स्मरणात्मिकां ते ।
शौरे! विधेहि सहसा कृपया तदर्थं
वाणीं ममेश! नितरां चतुरामिदानीम् ॥ १ ॥

पुंसां सकृत् स्मरणमात्रकृतामघौघं
सद्यो यतो हरसि तेन बुधैरजस्रम् ।
सङ्कीर्त्यसे हरिरितीश! तथाविधस्य
कं वा स्मृतिर्न भवतः कुरुते कृतार्थम् ॥२ ॥

किं वा स्मृतैर्बहुभिरच्युत! बन्धहेतु-
भूतैः फलं व्रजति वस्तुभिरत्र देही ।

---

१. पापभरितः.

यं संस्मरन् न पततीश! पुनर्भवाब्धौ
तस्य स्मृतिः किल तवैव सदा विधेया ॥ ३ ॥

नूनं मनश्चपलमेव नृणां क्षणार्ध-
मप्येकेतः[1] स्थिरयितुं सुतरामशक्यम् ।
यद्यप्यनन्त! भवदीयनिषेवयाथा-
प्यभ्यासतस्तदिदमाशु वशं नयेत ॥ ४ ॥

नैसर्गिके वरद! सत्यपि मानवाना-
मम्भोरुहाक्ष! मनसः स्फुटमस्थिरत्वे ।
यद्यत् प्रभो! प्रियतमं खलु तत्र तत्र
चेतो विशिष्य रमते स्वयमेव नूनम् ॥ ५ ॥

तस्मान्नरः प्रियतमं खलु वस्तु यद्यत्
तत्तद् भवत्परमहो सततं विदध्यात् ।
तेनाखिलेश! लभते स्मरणं तवेह
यत्नं विनैव जगतीह विधूतशङ्कम् ॥ ६ ॥

गीते यदीह रमते हृदयं मनोज्ञे
तन्त्रीनिनादसुखदायिनि तर्हि मर्त्यः ।
गीतेषु तावकचरित्ररसोज्ज्वलेषु
युञ्जीत मानसमजस्रमनन्तशायिन्! ॥ ७ ॥

यद्यम्बुजाक्ष! रमते हृदयं कथासु
रम्यासु तर्हि मनुजः सततं प्रभो! ते ।
नानावतारगुणकीर्तनसम्भृतासु
सक्तं मनः खलु कथासु सदा विदध्यात् ॥ ८ ॥

---

१. एकत्र.

आलेख्यकर्मसु तथैव सकौतुकं चेत्
चेतोहरेषु हृदयं मनुजस्तदासौ ।
नेत्रोत्सवान् मधुरिपो! तव मूर्त्तिभेदा-
नालिख्य तत्र विनियोज्य मनः प्रहृष्येत् ॥ ९ ॥

चेतो जगत्त्रयपते! प्रतिमासु चित्रा-
स्वामोदभाग् यदि तदा प्रतिमास्त्वदीयाः ।
कृत्वा सुवर्णमणिभूषणभासमाना
युञ्जीत तत्र हृदयं करुणैकसिन्धो! ॥ १० ॥

एतादृशाद् मुररिपो! मनुजः सुसाधा-
द[1]भ्यासतः स्मृतिमवाप्य विभो! त्वदीयाम् ।
लोके भवेत् सकलपापकुलाद् विमुक्तो
यत्नं विनैव धुतसंशयलेशमत्र ॥ ११ ॥

कार्या न चैव भुवनेश! विचारणात्र
स्मृत्वा यथारुचि भवन्तमनन्तशायिन्! ।
पापात् कथं भवति मुक्त इतीह यत् त्वं
स्वस्मर्तुरङ्ग! शुभदोऽसि हि सर्वथापि ॥ १२ ॥

लोके स्मरन्ति सुधियो हि भवन्तमीशं
ज्ञात्वा स्वरूपममलं तव वेदवेद्यम् ।
स्मर्तुं[2] तथा कथममी प्रभवन्ति भूमन्!
लक्ष्मीपते! जडधियो ननु मा[3]दृशोऽपि ॥ १३ ॥

तस्मान्निजां समनुसृत्य मनःप्रवृत्तिं
त्वामम्बुजाक्ष! सततं स्मरतां जनानाम् ।

---

१. अभ्यासात्. २. यथा सुधियः. ३. मद्विधा अपि.

तुल्यं प्रसीदसि किलेत्ययि बोद्धुमस्ति
कारुण्यभारजलधे! बहु नः प्रमाणम् ॥ १४ ॥

गोप्यस्त्वनारतमिहाम्बुरुहाक्ष! वाक्यै-
र्वेद्यं ह्यकृत्रिमगिरां[1] परचित्स्वरूपम् ।
त्वां जार इत्यखिलनाथ! हृदब्जमध्ये
स्मृत्वा ययुः परमहंसगतिं क्षणेन ॥ १५ ॥

धन्यौ हि देवकसुतानकदुन्दुभी[2] तौ
त्वां पुत्रवत्सलतया हृदि भावयित्वा ।
सम्प्रापतुः किल परं तव धाम नित्यं
सम्मोदसान्द्रममलं विनिवृत्तिहीनम् ॥ १६ ॥

गोपास्तथा जलजनाभ! वयस्यभाव-
मालम्ब्य साधु सततं हृदये निधाय ।
त्वां प्रापुरम्बुरुहनेत्र! भवाम्बुराशेः
पारं परं भुवननाथ! विना श्रमेण ॥ १७ ॥

चैद्यादयः सकलगर्ह्यतमाः सुमूढाः
स्मृत्वाखिलेश! रिपुभावनया भवन्तम् ।
नित्यं चराचरजगन्निवहैकबन्धुं
मुक्ता बभूवुरचिरात् किमितोऽपि चित्रम् ॥ १८ ॥

भीत्या च भोजनृपतिः प्रपिबंश्च खादन्
गच्छन् स्वपन्नथ लपन् हृदयेऽनुचिन्त्य ।
त्वामेव सन्ततमगाद् भुवनैकबन्धो!
सायुज्यमाशु तव खल्वसुरांशजोऽपि ॥ १९ ॥

---

१. वेदानाम्. २. देवकीवसुदेवौ.

तस्माद् विभो! कथमपीह भवन्तमेव
यो वै नरः स्मरति माधव! सर्वदापि ।
सोऽयं विमुक्त इह पापकुलादशेषात्
त्वामाप्नुयाद् विहगवाहन! निर्विशङ्कम् ॥ २० ॥

रागेण वत्सलतयापि च सौहृदेन
द्वेषेण हन्त भयभावनया स्मृतोऽपि ।
यस्त्वं प्रसीदसि नृणां स कथं न भूया-
स्तुष्टोऽनिशं कलयतां हृदि पूर्णभक्त्या ॥ २१ ॥

तस्मान्नरो जगति दुर्जयभीमभीम-
षड्वैरिरूपपृथु[1]सत्त्वसमाकुलं तम् ।
शौरे! तितीर्षुरखिलेश! भवाम्बुराशिं
नित्यं भवत्स्मरणमेव हि शीलयेत ॥ २२ ॥

विश्वैकनाथ! कथयाम्यधुनाहमत्र
त्वद्ध्यानयोगमरविन्ददलायताक्ष! ।
सर्वाघजातशमनैकनिदानभूतं
भक्तैकगम्य! कृपया हि तवैव भूमन्! ॥ २३ ॥

मित्रे रिपौ वरद! पापिषु पुण्यवत्सु
स्वीये परे च समबुद्धिरलं प्रशान्तः ।
तुल्याश्मलोष्टकनकश्च सरोजनाभ!
ध्यानेच्छुरच्युत! भवेत् तव सर्वदापि ॥ २४ ॥

सर्वत्र निस्पृहमतिश्च विविक्तदेश-
सेवी यतात्महृदयस्त्वपरिग्रहश्च ।

---

१. पृथुसत्त्वेत्यस्य नक्रादिप्राणीत्यर्थः.

भूत्वासनं दृढतरं परिकल्पयेच्च
देशे शुचौ न खलु तुङ्गमहो न नीचम् ॥ २५ ॥

कृत्वाम्बरेण भगवन्नथवाजिनेन
यद्वा कुशैर्विमलमासनमत्र तिष्ठन्[1] ।
प्रेक्ष्यात्मनोऽथ सहसा खलु नासिकाग्रं
मौनी जितेन्द्रियगणश्च दिशो नैपश्यन्[2] ॥ २६ ॥

सन्धारयन्नपि च वर्ष्म शिरश्च कण्ठं
स्वं स्थाणुवत् स्थिरतरं च समं निकामम् ।
भूत्वानिशं ननु मिताशननिद्र ईश!
ध्यायेद् भवन्तमरविन्ददलाक्षमेवम् ॥ २७ ॥

पद्मासनस्थ[3] इह माधव! मानवोऽसौ
कृत्वोर्न्मुखं[4] विधुनिभं प्रणवेन सद्यः ।
हृत्पद्ममच्युत! ततोऽनु विकासयेत् तं
त्वद्ध्यानलिप्सुरजित! त्रिगुणैर्मुरारे! ॥ २८ ॥

तस्योपरि द्युमणिसोमशुचीन्[5] क्रमेण
स्मृत्वा ततस्तदुपरीह कलायभासम् ।
शङ्खारिपङ्कजगदाञ्चितपाणिपद्मं
श्रीवत्सकौस्तुभधरञ्च विचिन्तयेत् त्वाम् ॥ २९ ॥

यत्त्वव्ययं वरद! धाम तवातिदिव्यं
शान्तं प्रशान्तमतिभिर्मुनिभिर्निषेव्यम् ।

---

१. आसनि इत्यर्थः. २. नञर्थकनशब्दसमासः ३. ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात् ततः ॥ पद्मासनमिदं प्रोक्तम्' इति तन्त्रसारः. ४. ऊर्ध्वमुखम्. ५. शुचिरग्निः.

स्मृत्वा पुमान् प्रथममेतदधोक्षजाथ
ध्यायेदिहेश्वर! भवन्तमचिन्त्यशक्तिम् ॥ ३० ॥

लक्ष्मीपते! जगति यान्ति महानुभावाः
सन्तो यदच्युत! परं तव धाम नित्यम् ।
सर्वोत्तमं जयति तद् विनिवृत्तिहीनं
वैकुण्ठसंज्ञितमनन्तसुखैकसान्द्रम् ॥ ३१ ॥

भक्तोत्तमा विधुतमत्सररागवैरा
यस्मिन्ननारतमहो निवसन्ति पुण्याः ।
तत् तादृशं तव पदं तु विकुण्ठसंज्ञं
चेतस्यहो न जनयेन्मुदमीश! कस्य ॥ ३२ ॥

भात्येतदीश! विविधैर्नयनाभिरामै-
र्जुष्टं पुनर्जनपदैरथ हृष्टपुष्टैः ।
यत्राम्बुजाक्ष! वसतां सदनानि वीक्ष्य
लज्जां वहत्यपि पुरी त्रिदशाधिभर्तुः ॥ ३३ ॥

रथ्यापणाल्यजिरनिष्कुटवेश्मवर्त्त[2]-
न्युद्यानगोष्ठहयसिन्धुरधान्यशालाः ।
यत्रानिशं मुखरिताः श्रवणाभिरामै-
स्त्वत्कीर्तनैर्मुररिपो! विलसन्त्यभीक्ष्णम् ॥ ३४ ॥

प्राकारपङ्क्तिरभितोऽस्य विकुण्ठलोक-
स्योच्चैर्लसत्यजित! रत्नमयी विचित्रा ।
रूपं स्वमीक्षितुमनन्त! दिगङ्गनानां
कुड्यार्पितेव नवदर्पणचारुपङ्क्तिः ॥ ३५ ॥

---

१. धाम्नि. २. वर्त्तनी एकपदी.

शोभानुषङ्गवशतो भुवनेश! तस्या
रत्नाचलेन समतामिह हैममद्रिम् ।
प्राप्तं निरीक्ष्य मिहिरः क नु मेरुरत्रे-
त्येवं सशङ्कहृदयो भवतीति मन्ये ॥ ३६ ॥

किञ्च भ्रमन् स परितः खलु हाटकाद्रिं
नानामणिव्रजलसद्द्युतिचित्ररूपम् ।
ज्ञातुं पटुर्न भवति स्वमपीह वर्णं
नैर्मल्यभाजि ननु तत्र निरीक्षितात्मा ॥ ३७ ॥

एकत्र पश्यति निजां तनुमेव गौरी-
मन्यत्र पाटलतमां क्वचिदीश! कृष्णाम् ।
एको यथा जगति तावदुपाधिभेदै-
र्नानात्वमाप्त इव भाति किलायमात्मा ॥ ३८ ॥

माणिक्यवासवदृषन्नवहीरसान्द्रात्
प्राकारतस्तत इह प्रसृता मरीचिः ।
गङ्गां कलिन्दतनयां च सरस्वतीं च
जेतुं विभाति युगपद् विहितोद्यमेव ॥ ३९ ॥

लक्ष्मीपते! वलयिते ननु तादृशेन
प्राकारमण्डलवरेण विकुण्ठधाम्नि ।
राजन्ति भासुरविमानवराणि भक्तै-
रध्यासितानि तव धन्यतमैर्निकामम् ॥ ४० ॥

भासा तथोन्नततया च मिथो नितान्त-
मुत्कर्षमच्युत! वहत्स्वथ तेषु भूमन्! ।

---

१. मिहिरः. २. 'अभितः परित' इति द्वितीया.

स्वैरं दिनानि कमलाक्ष! सदा नयन्तो
मोदं कमप्यनुभवन्ति हि तावकीनाः ॥ ४१ ॥

किञ्चातिवेलमनिशं भवदीयगाथा-
नामामृतैर्मुखरिताननपङ्कजास्ते ।
त्वत्कीर्त्तिमच्युत! मिथः परिकीर्तयन्तः
पूतं प्रभो! विदधते जगदन्तरालम् ॥ ४२ ॥

राजत्सुवर्णनवरत्नमया विचित्रा
हर्म्या निजोन्नततया गिरिराजतुल्याः ।
आभान्ति तत्र भुवनेश! धनेशगर्व-
सर्वङ्कषां वरद! सम्पदमावहन्तः ॥ ४३ ॥

आपिञ्जरेषु मणिभिर्ननु पञ्जरेषु
सञ्जातमोदमनिशं शुकशारिकाश्च ।
स्वैरं वसन्ति भगवन्! भवदीयनामा-
न्युच्चैस्तरां श्रुतिसुखानि समुद्गृणन्त्यः ॥ ४४ ॥

श्रोत्रद्वयाधिकसुखप्रदवाद्ययुक्त-
तौर्यत्रिकेण भगवन्! मुदिता नितान्तम् ।
भावत्कदिव्यचरितामृतसम्भृतेन
स्वैरं नयन्ति ननु तत्र दिनानि सन्तः ॥ ४५ ॥

नानामणिव्रजमयेष्वयि देव! तेषु
सौधेषु हन्त विचरन्नथ को न सद्यः ।
सर्वत्र वीक्ष्य पृथगात्मन एव देहं
बाहुल्यमीश! मनुते वपुषो निजस्य ॥ ४६ ॥

धारागृहेभ्य इह तास्वपि सौधराजि-
ष्वद्धा निपत्य सहसा स्फुटिताम्बुधारा ।
तत्रत्यहीरमयकुड्यरुचोऽनुषङ्गात्
तारातते रनुकरोति मरीचिवेणीम् ॥ ४७ ॥

उद्यानभूमिषु च तत्र महीरुहौघा
यत् ते वहन्ति कुसुमोद्गममप्यकाले ।
नैतद्विचित्रमखिलेश्वर! माधवे[1] त्व-
य्यश्रान्तमच्युत! लसत्यपि शेषशायिन्! ॥ ४८ ॥

ज्योत्स्नान्वितासु रजनीषु निजं शरीरं
संवीक्ष्य रत्नमयकुड्यतलेषु तत्र ।
आसादिता स्वदयितेति निशीथकाले-
ऽप्यद्धा भ्रमेण परितुष्यति चक्रवाकः ॥ ४९ ॥

संफुल्लसारससमूहलसत्पराग-
संवासितः सकलतापहराम्बुपूर्णः ।
वापीतटाकनिकरश्च सरोरुहाक्ष!
चेतो न कस्य शिशिरीकुरुते नु तत्र ॥ ५० ॥

मध्ये तु तस्य भगवन्! नगरी विभाति
साध्येति कापि परमस्य विकुण्ठधाम्नः ।
भ्राजिष्णुभूरिमणितल्लजहेमरूपा
प्राकारतोरणवृता नयनाभिरामा ॥ ५१ ॥

सा नाम दिक्षु चतसृष्वतुलैर्विशालै-
र्द्वारैश्चतुर्भिरखिलेश! लसत्यतीव ।

---

१. विष्णौ वसन्तमासे च.

अत्युन्नतैः सुरुचिरैर्मणिगोपुरैश्च
गेहैस्तथा परिवृता खलु भक्तजुष्टैः ॥ ५२ ॥

पर्यन्तभासिवलभिन्मणिमेचकाभ-
सामोददिव्यतुलसीवननिर्जिहानः ।
सन्तापहृन्नु जगत्त्रितयस्य पुर्यां
तस्यां तु कैटभरिपो! मृदु वाति वायुः ॥ ५३ ॥

भूमन्! भवत्प्रणयभाजनभूततादृग्-
विश्वाभिरामतुलसीमकरन्दलोभात् ।
गोविन्द! हन्त विहरन्त इह द्विरेफा
विन्दन्ति सौख्यमधियोऽप्यथ योगिभोग्यम् ॥ ५४ ॥

पीयूषदीधितिसितच्छविगर्वभार-
सर्वङ्कषस्फटिकतल्लजनिर्मिताभिः ।
सोपानपालिभिरतीव समुल्लसन्त्यो
वाप्यश्च तत्र विलसन्ति मनोज्ञतोयाः ॥ ५५ ॥

पैङ्कच्छिदापटुतया रैससम्भृतत्वात्
तौपोत्करप्रशमनैकपटुत्वतश्च ।
लक्ष्मीपते! परमहंसनिषेवितत्वाद्
वाप्यस्तु तास्तव कथा इव भान्ति नित्यम् ॥ ५६ ॥

चण्डादिभिर्भुवननायक! रक्षितेयं
द्वारेषु चक्रधर! सन्निहितैश्चतुर्षु ।

१. पङ्कशब्दः कर्दमपापयोः. २. रसशब्दो जलानन्दयोः. ३. तापशब्दः सूर्योष्मसंसारक्लेशयोः. ४. हंसशब्दः मरालयोगिनोः.

साध्या नगर्यवहितैः शितहेतिहस्तै-
दिव्यस्वरूपसहितैः परमष्टसङ्घयैः ॥ ५७ ॥

चण्डाह्वयो ननु रमेश! तथा प्रचण्डः
प्राग् द्वारि याम्य इह भद्रसुभद्रकौ च ।
तद्वज्जयोऽथ विजयोऽपि च पश्चिमे तु
सौम्ये स्थितावजित! [1]धातृयुतो विधाता ॥ ५८ ॥

किञ्चाखिलेश! कुमुदोऽप्यथ पुण्डरीकः
शौरे! तथैव कुमुदाक्षकशङ्कुकर्णौ ।
तद्वच्च वामनसमाह्वयसर्वनेत्रौ
पुर्यां स्थितावथ तथा सुमुखाह्वयश्च ॥ ५९ ॥

प्रोक्ता इमे वरद! दिक्पतयः पुरस्य
तस्यास्य कैटभनिषूदन! निस्तुलस्य ।
रक्षन्ति ते सततमीश! पुरं तदेत-
दक्षीणनित्यविभवैकनिकेतभूतम् ॥ ६० ॥

तस्याथ मध्यभुवि भाति समस्तलोक-
नेत्रद्वयानुपमकौतुकदायि दिव्यम् ।
अन्तःपुरं तव विभो! नवरत्नभासि-
प्राकारतोरणयुतं भुवनैकरम्यम् ॥ ६१ ॥

प्राकारपङ्क्तिभिरतीव समुच्छ्रितैश्च
तद्वद्विमाननिवहैर्हृदयाभिरामैः ।
जुष्टं विभाति तदिदं [2]भवदीयभक्तै-
रध्यासितैर्भुवननायक! धन्यधन्यैः ॥ ६२ ॥

---

१. धाता विधाता चेत्यर्थः. २. अध्यासनक्रियापेक्षया कर्तरि तृतीया.

मध्ये तु तस्य विलसत्यतिदिव्यराज-[1]
स्थानं सुतुङ्गमयि मण्डपमम्बुजाक्ष! ।
बालार्ककोटिसुषमोज्ज्वलपद्मराग-
स्तम्भोत्तमैः शतसहस्रमितैः समेतम् ॥ ६३ ॥

दिव्यस्रगम्बरविभूषितनाकनारी-
युक्तैरशेषदिविजैश्च निषेव्यमाणम् ।
युक्तं च मुक्तनिवहैरथ भाति साम-
गानोपशोभितमिदं मधुकैटभारे! ॥ ६४ ॥

तस्यापि मध्यभुवि भाति रमेश! दिव्यं
सिंहासनं सकलवेदमयं त्वदीयम् ।
धर्मादिदैवतगणैर्विधृतं तदीय-
पादत्वमीश! गमितैर्भुवनैकबन्धो! ॥ ६५ ॥

ज्ञानं च धर्म इह देव! तथा विरक्ति-
रैश्वर्यमित्यभिहिताः खलु देवतास्ताः[2] ।
सार्धं वहन्ति ननु वेदचतुष्टयेन
सिंहासनं सरसिजाक्ष! परं तदेतत् ॥ ६६ ॥

आधारशक्तिरखिलेश! तथैव शक्ति-
श्चिच्छक्तिरच्युत! तथैव सदाशिवाख्या ।
इत्यम्बुजाक्ष! कथिताः! खलु शक्तयो वै
धर्मादिदैवतगणस्य परं मुरारे! ॥ ६७ ॥

---

१. अतिदिव्यं भृशप्रशस्तं राजस्थानं राजासनं यस्मिंस्तत्. २. सिंहासनपादत्वापन्नाः.

मध्ये च तस्य निवसन्ति रथाङ्गपाणे!
सिंहासनस्य रविवह्निसुधामयूखाः।
कूर्मस्तथा फणिविहङ्गपती च वेदाः
पीठत्वमीश! गमिताश्च समस्तमन्त्राः॥ ६८॥

सर्वाक्षराकलितमीश! वदन्ति सन्तो
यद् योगपीठमिति माधव! दिव्यदिव्यम्।
तन्मध्यतोऽष्टदलमीश! विभाति पद्म-
मुद्यत्सहस्रकिरणच्छवि कैटभारे!॥ ६९॥

एतादृशं मधुरिपो! तव धाम शान्तं
ध्यात्वा नरः प्रथममच्युत! योगिसेव्यम्।
पश्चाच्च तत्कमलमध्यगकार्णिकायां
भान्तं स्मरेद् यतमतिश्च भवन्तमीशम्॥ ७०॥

नो जायते भुवि नृणां मनसः प्रवृत्ति-
र्वस्तुन्यसंशयमदृष्टचरे परोक्षे।
ध्यातुं ततस्त्वसुकरं तदिदं विकुण्ठ-
धामेति केचन वदेयुरशेषबन्धो!॥ ७१॥

श्रोत्रत्वगीक्षणमुखैः करणैस्तु यद्य-
द्यैर्यैः प्रभो! समुचितं ननु भोक्तुमत्र।
तैस्तैस्तु तान्यननुभूय तदीयतत्त्वं
नो वेत्ति चेति वचनं खलु सत्यमेव॥ ७२॥

लोके सितासितहरिन्मुखवर्णभेदं
जानाति नैव बहुधा ननु बोधितोऽपि।

वाक्यैः सविस्तरतरैरयि दैत्यवैरि-
ह्याजन्मनेत्रविकलो मनुजो हि नूनम् ॥ ७३ ॥

तद्वच्च कर्णविकलोऽत्र नरः कथं वा
तन्त्रीनिनादरसमिश्रितगानसौख्यम् ।
जानाति हन्त भुवनेश! कवीश्वराणां
वक्त्राब्जनिर्गलितसत्कवितारसं वा ॥ ७४ ॥

मर्त्यो जगत्यतिदरिद्रतमः कथञ्चित्
भिक्षाटनार्जितकदन्नभृतात्मकुक्षिः ।
बोद्धुं प्रभो! कथमिहार्हति हन्त सौख्यं
वित्तेशभोग्यमतुलं भुजगेन्द्रशायिन्! ॥ ७५ ॥

वन्ध्या वधूर्भुवननाथ! कथं नु वेत्ति
पीडां प्रसूतिसमये किल जायमानाम् ।
तद्वज्जडः कथमवैति परिश्रमं तं
विद्यासिबद्धमनसा त्वनुभूयमानम् ॥ ७६ ॥

तस्माददृष्टचरमीश! तथा परोक्षं
तद् धाम दिव्यमखिलेश! विकुण्ठसंज्ञम् ।
ध्यातुं जनैर्न खलु शक्यमिति त्रिधामन्!
वार्त्ता च नैव सुधिया पुरुषेण हेया ॥ ७७ ॥

तत् पङ्कजाक्ष! सकलैः श्रमलेशवर्जं
ध्यातुं विभो! वरद! धाम तवेह लोके ।
कारुण्यवारिनिधिना भवतैव सोऽयं
लक्ष्मीपते! विरचितः सुकरोऽस्त्युपायः[1] ॥ ७८ ॥

---

१. उपायश्च वैकुण्ठतुल्यस्यानन्दपुरस्य सृष्टिरूप उत्तरश्लोके स्पष्टः.

भाग्यं जगत्त्रयि सतामिव पुञ्जभूतं
यत् ते परं प्रियतमं च विकुण्ठतुल्यम् ।
तद्धाम शाश्वतमिहाश्रमतः[1] स्मरेत् स्या-
न्नदूरसंङ्गमनिशं पुरुषो मुरारे! ॥ ७९ ॥

ध्यात्वा पुरा पुरमिदं कमलाक्ष! पश्चात्
तत्रत्यमन्दिरगते ननु पावनाख्ये ।
रम्ये विमानवरसीम्नि सदा शयानं
त्वां भावयेदिह पुमान् भुजगेन्द्रतल्पे ॥ ८० ॥

आदौ सहस्रकिरणायुतदिव्यकान्ति-
सन्दोहजिष्णुमाणिमण्डलमण्डितेन ।
भान्तं जगत्त्रयगुरो! मकुटेन तत् ते
ध्यायेत् सुनिश्चलमतिः परमुत्तमाङ्गम् ॥ ८१ ॥

पश्चाद् रमेश! तुलसीवकुलाम्बुजात-
मन्दारकुन्दसुमनोमयमालिकासु ।
लोभच्छलेन मकरन्दनिषेवणस्य
ध्यायेन्नतं[2] मधुकरैस्तव केशपाशम् ॥ ८२ ॥

भूयः स्मरेदजित! शारदपूर्णचन्द्र-
बिम्बच्छविप्रकटगर्वहरं मनोज्ञम् ।
साफल्यदायि जगतामिह नेत्रसृष्टे-
र्लक्ष्मीपते! तव विभो! वदनारविन्दम् ॥ ८३ ॥

---

१, अश्रमेण. २. गुणतः पराजयान्नमस्कारेण सम्भावितामिति तात्पर्यम्.

अत्यन्तमेचकतरालकसंवृतं ते
ध्यायेत् ततः शिशुशशाङ्कसमानशोभम् ।
अस्तोकसौरभतताखिलदिग्वितान-
कस्तूरिकातिलकितं ननु फालदेशम् ॥ ८४ ॥

अस्मादृशेष्वलमनन्यपरायणेषु
नित्यं प्रदर्शितकृपामयवारिराशेः ।
कल्लोलरूपमनिशं यतधीः स्मरेत् ते
चिल्लीयुगं तदनु नाथ! रथाङ्गपाणे! ॥ ८५ ॥

सम्फुल्लसारसदलच्छवि नेत्रयुग्मं
शौरे! द्विवर्णमपि दृश्यतरत्रिवर्णम् ।
आकर्णदीर्घमखिलेश! ततः स्मरेत् ते
भक्तार्त्तिभञ्जनकटाक्षसुधारसार्द्रम् ॥ ८६ ॥

ध्यायेत् ततश्च मनसा मधुकैटभारे!
तां नासिकां तव विभो! जगदाधिहन्तुः ।
राजत्तिलप्रसवतल्लजगर्वभार-
सर्वङ्कषानुपमितद्युतिलोभनीयाम् ॥ ८७ ॥

रागं समस्तजगतामपि विद्यमान-
मात्मन्यथो बहिरपि प्रकटं विधातुम् ।
उद्योगवानिव य ईश! बरीभरीति
रागं तमच्युत! ततस्त्वधरं स्मरेत् ते ॥ ८८ ॥

लक्ष्मीपते! दरविकासविराजमान-
कुन्दावदातरदवृन्दरुचा सनाथम् ।

मन्दास्मितं त्रिभुवनैकविमोहनं ते
ध्यायेत् ततः सरसिजाक्ष! कृपातिसान्द्रम् ॥ ८९ ॥

ध्यायेत् ततः श्रवणयुग्मलसन्मनोज्ञ-
रत्नौघयुङ्मकरकुण्डलकान्तिवेण्याः ।
संशीलनाद् द्विगुणितानुपमेयशोभं
गण्डद्वयं तव विभो! मणिदर्पणाभम् ॥ ९० ॥

आरूढपूर्वधरणीधरवासरेश-
कोटिप्रभानिलयकौस्तुभरत्नभासा ।
सञ्जातपाटलरुचं तदनु स्मरेत् ते
ग्रीवां प्रभो! रुचिरकम्बुसमानशोभाम् ॥ ९१ ॥

संग्रामदुर्जयतरत्रिदशारिवीर-
प्रौढासुवातगणभुग्भुजगायितौ तौ ।
बाहू महार्घमणिकङ्कणमण्डितौ ते
ध्यायेत् ततो भुवननायक! भक्तिपूर्वम् ॥ ९२ ॥

राजत्यहो यदनिशं त्रिजगज्जनन्या
लक्ष्म्यास्तु नित्यनिलयायितमार्त्तबन्धो! ।
ध्यायेत् तदेतदथ रम्यमुरस्स्थलं ते
श्रीवत्सलक्ष्म विलसन्नववन्यमालम् ॥ ९३ ॥

यत्राम्बुजाक्ष! निवसन्ति जगन्ति हन्त
भूमंश्चतुर्दश चराचरवन्ति शौरे! ।
तं संस्मरेदिह ततो जठरं त्वदीयं
लक्ष्मीपते! ननु वलित्रयशोभमानम् ॥ ९४ ॥

अश्रान्तमास्यजलजैर्भगवंश्चतुर्भि-
राघोष्यमाणनिगमेन परं विधात्रा ।
अध्यासितं ननु रमेश! ततः स्मरेत् ते
नाभीपुटोद्भवमशेषगुरो! सरोजम् ॥ ९५ ॥

अत्युत्तमच्छविनिकेतनभूतरत्न-
पर्युप्तया मधुरिपो! कलधौतकाञ्च्या ।
ध्यायेदलङ्कृतमहो तव मध्यदेश-
मस्थूलमप्यकृशयाथ रुचा सनाथम् ॥ ९६ ॥

सन्ध्याभ्रवर्णलसितेन ततो मनोज्ञ-
पीताम्बरेण परिवेष्टितमूरुयुग्मम् ।
जङ्घे च केकिवरकण्ठसमानशोभे
ध्यायेत् तव त्रिजगदेकपतेर्मुरारे! ॥ ९७ ॥

अम्भोजगर्भसुकुमारपयोधिकन्या-
पाणिद्वयेन परिलालितमीश! नित्यम् ।
भक्तौघवाञ्छितफलप्रदमार्त्तबन्धो!
ध्यायेत् पदाम्बुजयुगं तव योगिसेव्यम् ॥ ९८ ॥

अङ्गेषु देव! सकलेषु तवातिरम्ये
तत्राङ्घ्रिपङ्कजयुगे विनियोज्य चेतः ।
सन्त्यक्तसर्वविषयस्पृह एष मर्त्यः
सम्प्राप्नुयाद् दृढमनिर्वचनीयसौख्यम् ॥ ९९ ॥

तस्मात् प्रभो! नलिनपत्रगताम्बुबिन्दु-
लोलं त्ववाप्य नरजन्म भुवीह देही ।

त्वामेव चक्रधर! शाश्वतमोदलब्ध्यै
ध्यायेदमेयकरुणानिधिमच्युतैवम् ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां सप्तमशतकम् ।

## अथाष्टमशतकम् ।

अथ कथयामि चतुर्थीं
तव पदयुगसेवनाख्यभक्तिमहम् ।
सरसिजनाभ! तदर्थं
कुरु मम सहसा पटीयसीं वाणीम् ॥ १ ॥

श्रुतिनिचयागमषट्क-
स्मृतिसन्ततिसत्पुराणशतकेषु ।
त्वत्पदभजनादन्यत्
सारं प्रतिपाद्यमस्ति नैव दृढम् ॥ २ ॥

स्मरहरसरसिजनिलय-
त्रिदिवकुलाधीशमुख्यसकलसुराः ।
यत् किल वाञ्छन्त्यनिशं
ततो वरं किं तवाङ्घ्रियुगभजनात् ॥ ३ ॥

कलशपयोनिधिकन्या[1]
जगतां जननी निसर्गचपलापि ।
त्यजति हि सहसा स्वीयं
शीलं शौरे! त्वदङ्घ्रिभजनविधौ ॥ ४ ॥

---

१. लक्ष्मीः.

जगति सतृष्णाः सर्वे
यल्लेशाप्त्यै तथाविधा सेयम्[1] ।
यत्र सतृष्णा नित्यं
किं परमस्मात् पदाब्जभजनात् ते ॥ ५ ॥

यद्गलितं वरद! रजो
मूर्ध्ना सन्धार्य हन्त विबुधवराः ।
स्वयमिह रजसा रहिता
जायन्ते नाथ! चित्रमहो ॥ ६ ॥

तृणवदिदं जगदखिलं
मन्वाना निस्पृहाः परं मुनयः ।
शुकभृगुनारदमुख्या-
स्त्वत्पदभजने तु सस्पृहा नित्यम् ॥ ७ ॥

यत्प्राप्त्यै भुवि केचिद्
विगलितदेहाभिमानमतिघोरम् ।
तप इह दधते[2] भूमन्!
सा पदसेवा न केन वाञ्छ्या ते ॥ ८ ॥

श्रमलवरहितं तस्यां
प्राप्तायामयि तवाङ्घ्रिसेवायाम् ।
तव कृपयैव मुरारे!
प्राप्यं मनुजैरितोऽपि किं भाग्यम् ॥ ९ ॥

निगमागमविहितानि
प्रचुरतराघौघशमनदक्षाणि ।

१. लक्ष्मीः. २. पुष्णन्ति.

तन्यन्ते वरद! बुधै-
यल्लाभायैव सकलकर्माणि ॥ १० ॥

यद्वन्नगरीमेकां
सन्ति प्राप्तुं बहूनि वर्त्मानि ।
तद्वत् त्वत्पदसेवा-
मेकां लब्धुं समस्तकर्माणि ॥११ ॥

व्रजति न वै साफल्यं
जगति विना यां किलैकमपि कर्म ।
सुविमलमपि मुरवैरि-
स्तां पदसेवां तवेह को नेच्छेत् ॥ १२ ॥

इष्टापूर्त्तैः केचित्
कतिचिदजस्रं तथान्नदानेन ।
कतिचन दानैर्विविधैः
सुकृतममेयं किलार्जयन्त्यत्र ॥ १३ ॥

तैस्तैर्धर्मैरेभि-
र्बहुषु च तुष्टेषु जीवजालेषु ।
सकलहृदन्तर्यामी
तुष्टो भविता त्वमेव विश्वात्मन्! ॥ १४ ॥

तुष्टे त्रिभुवननाथे
भवति किलोद्यत्कृपासुधाम्भोधौ ।
प्राप्ता तव पदसेवा
श्रमलवरहितं भुवीह मर्त्यैः स्यात् ॥ १५ ॥

१. इष्टैर्यज्ञैः पूर्तैः खातादिकर्मभिश्च.

तस्मात् कमपि हि मार्गं
जगति समालम्ब्य नाथ! धुतदोषैः।
यत्नो विधीयमान-
स्तव पदसेवैकलिप्सयैव दृढम् ॥ १६ ॥

भुवनविधातृत्वं वा
त्रिभुवनमान्यं पदं तथैन्द्रं वा।
अपि दिगधीशत्वं वा
त्वत्पदसेवाफलान्नान्यत् ॥ १७ ॥

जगतः सृष्टिं कुर्व-
न्नपि ननु भवदाज्ञयैव विधिरीश!।
लभते बन्धान्मुक्तिं
मनसा स्मृत्वैव ते पदाम्भोजम् ॥ १८ ॥

भुवनदुरापान् भोगान्
भुञ्जानोऽप्यथ वलारिरयि नाके।
अधिगतसकलार्थोऽसौ
वृणुते त्वत्पादसेवनैकरतिम् ॥ १९ ॥

तद्वद् धनदजलेश-
ज्वलनयमोग्रादयोऽपि दिक्पालाः।
शिरसि कृताञ्जलिबन्धं
त्वत्पदसेवां सदैव याचन्ते ॥ २० ॥

इदमिह शीलं भविनां[1]
यदिह किलावाप्तुमीप्सितं किमपि।

---

१. संसारिणाम्.

सेवन्ते मुरवैरिं-
स्तत्प्राप्तेर्हेतुभूतमयि वस्तु ॥ २१ ॥

ईप्सितलाभे तु पुनः
क्षणमपि तन्नाद्रियन्त इह नूनम् ।
चिरमिह वाञ्छितलब्ध्यै
संसेवितमप्यतीव यत्नेन ॥ २२ ॥

शान्तपिपासः कूपं
सम्भृतजठरस्तथातिथिर्गेहम्[1] ।
भिषजं परिहृतरोग-
स्त्यजति धरायां नरोऽत्र निश्शङ्कम् ॥ २३ ॥

धनभुवमाप्तद्रविणो
लब्धाम्नायस्तथा किलाचार्यम् ।
जितरिपुरपि रणभूमिं
प्रोज्झति जगतीह मानवो नूनम् ॥ २४ ॥

ऋत्विङ्निकरस्तद्वद्
यजमानं दत्तदक्षिणं विधिवत् ।
दातारं त्यजति दृढं
सम्पूर्णमनोरथस्तथैवार्थी ॥ २५ ॥

लब्धमरन्दश्च तथा
मधुपसमूहः सरोजिनीं त्यजति ।
मधुरफलान्यथ भुक्त्वा
विटपिनमपि तद्वदेव विहगततिः ॥ २६ ॥

---

१. अन्नदातुर्गृहम्.

अध्यात्मज्ञानविधू-
    ताखिलमोहस्तथा कुतर्करतिम् ।
त्यजति च सिद्धौषधभाङ्
    मार्गणमपि वीरुधामरण्यभुवाम् ॥ २७ ॥

वनभुवि धावन् धावन्
    विधृतशरासेपुरच्युत! पुलिन्दः ।
मृगमनु मृगमदलाभे
    त्यजति तदेतच्च साहसं सहसा ॥ २८ ॥

तस्माद् भविनः सर्वे
    जगति किलाश्रित्य वाञ्छितावाप्त्यै ।
तत्प्रदमच्युत! वस्तु
    त्यक्ष्यन्तीति स्फुटं तदिष्टाप्तौ ॥ २९ ॥

तर्हि त्रिदिवदुरापा-
    नपि भोगान् दातुमत्र का दक्षा ।
इति खलु विचार्यमाणे
    त्वत्पदसेवैव भूतले त्वेका ॥ ३० ॥

अनधिगतार्था मनुजा
    वरदभवत्पादसेवयाथ तया ।
अधिगतसकलार्थाः स्यु-
    र्लक्ष्मीजाने! भुवीह निश्शङ्कम् ॥ ३१ ॥

अधिगतसकलार्थाश्च
    द्रुहिणवलारातिमुख्यविबुधेन्द्राः ।

---

१. अन्वेषणमपि. २. एवं स्थिते.

किमिह स्पृहयन्तरत्वत्-
पद्भजनं सारसाक्ष! रचयन्ति ॥ ३२ ॥

तावकचरणसरोज-
द्वन्द्वनिषेवाफलस्वरूपाणाम् ।
स्वीयानां पदवीनां
नित्यं परिरक्षणार्थमिति विद्मः ॥ ३३ ॥

तर्हि जगन्नश्वरतां
विज्ञायाशेषवस्तुविमुखानाम् ।
जनयति कस्मात् सक्तिं
यमिनामपि तावकाङ्घ्रियुगसेवा ॥ ३४ ॥

इति खलु भूयो भूयो
मनसा सम्यग्विचार्यमाणे तु ।
भाति हि मे धिषणायां
पङ्कजनाभैवमेव वाच्यमिति ॥ ३५ ॥

अस्ति स्फुटमिह तस्यां
किमपि सुखं त्वत्पदाब्जसेवायाम् ।
अनुपममक्षुब्धतमं
स्थिरममलं त्वनुभवैकवेद्यमहो ॥ ३६ ॥

जगति विभो! विज्ञातुं
यदशक्यं करणपञ्चकेनापि ।
वाङ्मनसयोरविषयो
जयति सुखं तत् तवाङ्घ्रिभजनभवम् ॥ ३७

निर्णेतुं तद्रूपं
शेकुर्नाद्यापि हन्त मुनयोऽपि ।
किमुत सुमन्दमनीषाः
स्यानन्दूरेश! मादृशा मनुजाः ॥ ३८ ॥

सकृदनुभूय च सौख्यं
तत् पदसेवाभवं तवेह विभो! ।
को नु विदध्यात् सक्तिं
जडमतिरपि लौकिकेष्वयि सुखेषु ॥ ३९ ॥

विषयसुखेषु नराणां
स्यान्नूनं तावदेव सुखबुद्धिः ।
यावत् त्वत्पदसेवा-
भवसौख्यं नाप्यते निरस्ततमः ॥ ४० ॥

यद्वन्मृगतृष्णायां
तोयभ्रान्त्या प्रधावतीह मृगः ।
तद्वद्विषयसुखेषु
भ्रमति किलाज्ञो जनः सुखभ्रान्त्या ॥ ४१ ॥

किञ्चन गुळसम्मिश्रां
गुळिकां लोकेऽत्र निम्बचूर्णकृताम् ।
मुक्त्वा कः सुखमीयात्
तद्वदहो सुखमपीह विषयभवम् ॥ ४२ ॥

हास्यो यत्नो यद्वत्
काचमणेर्लब्धये हि मर्त्यानाम् ।

१. तादृशगुळिकाभोजनसुखवत्.

तद्वाद्विषयसुखस्य
प्राप्त्यै रचितः स्फुटं नृभिर्यत्नः ॥ ४३ ॥

स्तोकसुखं बहुदुःखं
यस्माल्लोके विभाति विषयसुखम् ।
दुःखदमेवेति ततो
विज्ञेयं तन्मुकुन्द! निश्शङ्कम् ॥ ४४ ॥

किञ्च न जागर्त्ति तथा
किमपि सुखं त्रिष्वपीश! भुवनेषु ।
यन्न हि दुःखविमिश्रं
त्वत्पदसेवासुखादृते विमलात् ॥ ४५ ॥

तस्मात् त्वत्पदसेवा-
जन्यसुखस्यांशलेशमपि लोके ।
प्राप्तुं दक्षाणि स्युः
कथमन्यान्यम्बुजेक्षण! सुखानि ॥ ४६ ॥

प्रचलत्तुङ्गतरङ्ग-
स्याम्भोधेरपि कदाचिदथ तोयम् ।
गणयेन्न[1] तु बत सीमां
त्वत्पदसेवाभवस्य सौख्यस्य ॥ ४७ ॥

गणयेदपि पुरटानां[2]
राशीन् हेमाचलस्थितानमितान् ।
जगति तथापि न सीमां
शर्मततेस्तावकाङ्घ्रिभजनभुवः ॥ ४८ ॥

---

१. परिच्छिन्द्यात्. २. सुवर्णानाम्.

किं बहुना सिद्धान्ताः
सर्वे यान्त्येव पूर्वपक्षत्वम् ।
पदभजनात्मक एक-
स्तव भगवन्! शिष्यते हि राद्धान्तः ॥ ४९ ॥

किञ्च जगत्त्रयपाप-
व्यूहच्छेदे किलास्य[1] वैदग्ध्यम् ।
प्रथयति जह्नोस्तनये-
वोद्भूता ननु पदाब्जयुगलात् ते ॥ ५० ॥

प्रभवति वक्तुं को वा
माहात्म्यं जगति जह्नुतनयायाः ।
वहते यां ननु शिरसा
सादरमद्यापि पार्वतीशोऽपि ॥ ५१ ॥

श्रवणं दर्शनमात्रं
यस्याः पापानि हन्ति सकलानि ।
किमुत विभो! तत्र[2] कृतं
मज्जनमथवा तदम्भसां पानम् ॥ ५२ ॥

तस्यास्तुङ्गतरङ्गो-
ल्लुठनसमुद्भूतकलकलारावम् ।
श्रुत्वा भृशतरभीत्या
धावति पापं न कास्वहो दिक्षु ॥ ५३ ॥

क्षुद्रतरैनरस्कानां
पातकहारीणि सन्ति तीर्थानि ।

---

१. पदभजनस्य. २. गङ्गायाम्.

निष्कृतिनिवहैरप्यघ-
मनिवार्यं हरति देव! गङ्गेयम् ॥ ५४ ॥

यन्नामाक्षरमाद्यं
श्रुत्वा केलयन्ति[2] कर्णयोः पाणिम् ।
तीर्थान्यन्यानीदृक्[3]-
पातकिलाभो महोत्सवो यस्याः ॥ ५५ ॥

अध्वरदानादिभिर-
प्यनिवार्यं रोगमीश! पापमयम् ।
सहसा दूरीकर्तुं
विलसति परमं हि भेषजं गङ्गा ॥ ५६ ॥

पायंपायं तोयं
गङ्गाया यावदिच्छमिह ये तु ।
जायन्ते गततापा-
स्तद्भाग्यं को भवेत् पटुर्वक्तुम् ॥ ५७ ॥

तापत्रयमभिहन्तुं
लोकस्यात्मानमाश्रितस्य परम् ।
मन्ये गङ्गा जाता
नाम्नेयं त्रिपथगेति[4] विश्वगुरो! ॥ ५८ ॥

संसेव्येह शरीरी
भाग्याद् भागीरथीं हताघौघाम् ।

---

१. यस्य पातकिनो नामधटकमक्षरम्. २. पातकसङ्क्रमभयादिति भावः. ३. ईदृग् अन्यतीर्थोद्वेजकनामधेयो यः पातकी तस्य लाभः. ४. त्रिपथेन आध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयहननानुकूलेन मार्गत्रयेण गच्छतीत्येवं त्रिपथगानामानिर्वचनमुत्प्रेक्ष्यते.

देवत्वं दिवि लब्ध्वा
भविता भागीरथी[1] ननु सुधायाम् ॥ ५९ ॥

तनुरिव सा विश्वसृजो
भाति भृशं सर्वतोमुखवती[2] च ।
वहति तथैव सरागां
श्रीनाथ! सरस्वतीं[3] च मुरवैरिन् ॥ ६० ॥

विन्दति नरके पापी
नानारूपं श्रमं नवै पापम् ।
लभते गङ्गायां तु
श्रममतुलं पापमेव ननु पापी ॥ ६१ ॥

दण्डयताह कृतान्ता
नरके खलु पापिनं विधूतदयम् ।
निर्मुच्याघिनमघतो
दण्डयतीहाघमेव सुरतटिनी ॥ ६२ ॥

सकुतुकमहह लुठन्त-
स्तद्वीचीततिषु मानवाः के के ।
लुठनैर्नरके रहिता
भगवन्! नो यान्ति मोदमनवद्यम् ॥ ६३ ॥

हन्त विमानारूढा-
नायातो वीक्ष्य पापिनो नाके ।

१. यथाक्रतुन्यायेन सेव्याभिन्नः, अथच (सुधायां) भागी अंशी रथी रथवांश्च. २. जलवतीं सर्वत आननवतीं च. ३. नदीं वाग्देवीं च.

तत्सम्पर्काद्[1] देवा
अपि मूर्ध्ना संनमन्ति हि विमाना[2]: ॥ ६४ ॥

अघिनां सुकृतवतां च
स्यान्नूनं तावदेव ननु भेदः ।
यावज्जह्नुसुतायाः
सलिलेन क्षाल्यते निजं न वपुः ॥ ६५ ॥

सद्भिर्गर्हितमवनौ
दर्शनमपि पापिनां येषाम् ।
अनुषङ्गाद् गङ्गाया-
स्तेऽपि भवन्त्यतिथयो निलिम्पपुरे[3] ॥ ६६ ॥

याम्यभटोत्साहो वा
तद्वत् कोलाहलश्च तन्नगरे ।
यातो विलयं सहसा
यावद् गङ्गा महीतलं प्राप्ता ॥ ६७ ॥

सुमनःसौरभहरण[4]-
प्रोद्धतोद्वेलपातकोऽपि परम् ।
अनुषङ्गाज्जह्नुभुव-
स्त्रिभुवनमनिशं पुनाति पवमानः ॥ ६८ ॥

कृत्वा पूतान् कृत्स्नान्
पातकिनः पुनरपीह तान् लिप्सुः ।
मन्ये मार्गयतीयं
सुरतटिनी गिरिशमौलिमाधिरुह्य ॥ ६९ ॥

---

१. गङ्गासम्पर्कात्. २. निरहङ्काराः. ३. देवनगरे. ४. हरणेति चोरणेत्यर्थः.

भरितक्षारजलं तं
स्वीकृत्याम्भोनिधिं स्वभर्तृतया ।
हेयमपेयमपीयं
कलयति तीर्थावतंसमिह लोके ॥ ७० ॥

अग्र्यगिरोऽप्यनुभावं
गङ्गायाः वक्तुमुद्यताः कवयः ।
[1]व्यग्रतरत्वं वचसि
स्फुटमनघ! प्राप्नुवन्ति नो के के ॥ ७१ ॥

गङ्गावर्णनलोलैः
कवितिलकैरतिशयोक्तिरिह लोके ।
करुणानिधे! प्रयुक्ता
भवति हि निस्संशयं स्वभावोक्तिः ॥ ७२ ॥

सादृश्यानुपपत्ते-
स्तस्याः केनापि वस्तुना लोके ।
उपमानाभाववशाद्
वाच्यो नूनं त्वनन्वयः कविभिः ॥ ७३ ॥

निजरसनाग्रात् कविभि-
र्ज्ञातुं सम्प्रेषितेव गुणमस्याः ।
मन्ये [2]सरस्वती सा
श्लिष्यति गङ्गां [3]सरस्वतीभूय ॥ ७४ ॥

धीरसमीरोद्भूत-
स्वच्छसुशीताम्बुशीकरोपेतम् ।

---

१. आकुलतरत्वम्. २. वाग्देवी. ३. नदीविशेषीभूय.

तीरं गाङ्गं श्रित्वा
स्वर्वासेऽपि स्पृहां न कस्त्यजति ॥ ७५ ॥

तरवस्तत्तीरभवाः
पवनचलैर्मृदुतलैः स्वपर्णाग्रैः ।
रचयन्ति वीजनविधिं
येऽस्यास्ते नूनमीश! धन्यतमाः ॥ ७६ ॥

लसतां गङ्गासलिले
सरसिरुहाणां मिषेण सुरसुदृशाम् ।
पश्यन्तीनामेनां
दृश्यन्ते बिम्बितानि वदनानि ॥ ७७ ॥

चित्रं [1]भङ्गवती सा
तनुते संश्रितम[2]भङ्गसुखपूर्णम् ।
[3]जलमय्यप्यथ नृणा-
मज्ञानं हरति निस्तुलं सहसा ॥ ७८ ॥

मनुजैर्मुक्तिकरीति
स्वनदीति सुरैस्त्वदङ्गजेति वरैः ।
शं तनुतामिति मुनिभिः
शन्तनुदायिता प्रकीर्तिता सेयं ॥ ७९ ॥

शिशुशशिचूडां स्वकरैः
कुम्भाम्भोजे वराभये दधतीम् ।

१. तरङ्गवती अपायवती च. २. अनपायिसौख्यभरितम्. ३. जलशब्दो जडे पयसि च.

शुभ्रां शुभ्राभरणां
सितमकरस्थां स्मरन्ति तां कृतिनः ॥ ८० ॥

इयमपि मकरन्दत्वं
प्राप्ता यत्राङ्घ्रिपङ्कजे भवतः ।
गङ्गा सकलाघहरा
तस्य निषेवा कथं नृणां न स्यात् ॥ ८१ ॥

तस्मात् कार्यो यत्नो
जगति समस्तैः शुभेच्छुभिर्मनुजैः ।
तावकचरणसरोज-
द्वन्द्वनिषेवाप्तये हि निश्शङ्कम् ॥ ८२ ॥

अथ कथयाम्ययि भगवन्!
पदयुगसेवाविधिं तवेह मुदा ।
सकलसुरासुरमर्त्य-
प्रणतपदाम्भोरुहस्य तव कृपया ॥ ८३ ॥

वपुषा वचसा मनसे-
त्येवं भवति त्रिधा चरणसेवा ।
उत्कर्षमासु च तिसृ-
ष्वीश! वदन्युत्तरोत्तरं मुनयः ॥ ८४ ॥

शिरसा तव पदयुगला-
न्निस्सृतमथ तीर्थतीर्थमज! तोयम् ।
सकलविधांहःक्षतये
सन्ततमखिलेश! धारयेन्मनुजः ॥ ८५ ॥

तदिदं संप्रोक्ष्य पुनः
सर्वाङ्गेष्वपि पुमानसौ सलिलम् ।
स्वतनुस्थितमिह पापं
सर्वं विद्रावयेदशेषगुरो! ॥ ८६ ॥

तद्वत् त्वत्पदकमल-
द्वयवारिवस्यार्हमादरान्नित्यम् ।
सुरभिलकुसुमकदम्बक-
मवाचित्यारात् तवोपदीकुर्यात् ॥ ८७ ॥

भवदङ्घ्रिव्यतिकरतो
धन्यतमैस्तुलसिकादलैर्नितराम् ।
निचितायां चिरमवनौ
विलुठेत् पुलकी सबाष्पनेत्रश्च ॥ ८८ ॥

तावकचरणसरोज-
द्वन्द्वसमालोकनेन ननु परमम् ।
साफल्यं वरद! दृशो-
र्लक्ष्मीनाथार्जयेदयं मनुजः ॥ ८९ ॥

पदयुगविगलत्तुलसी-
दलनिचयाघ्राणतस्तवाजस्रम् ।
धन्यतमामघवैरिन्!
मनुजोऽयं नासिकां तथा कलयेत् ॥ ९० ॥

दोर्भ्यामञ्जलिबन्धं
कलयेत तद्वत तवाङ्घ्रिसरसिजयोः ।

हरति हि निश्शङ्कं यो[1]
बन्धमशेषं रमापते! भविनाम् ॥ ९१ ॥

अघहर! वचसा च तथा
सेवां रचयेन्मुकुन्द! पदयोस्ते ।
सकलपरीतापौघ-
क्षतये मर्त्योऽयमादरान्नित्यम् ॥ ९२ ॥

प्रथयति वागेकैव
स्फुटमिह भेदं नरस्य तिर्यग्भ्यः ।
क नु विनियोज्या सा च
श्रीरमण! विना तवाङ्घ्रिसेवायाः ॥ ९३ ॥

द्रविणमदोन्मत्ताना-
मसतां प्रीत्यै वचोभिरलमुदितैः ।
मनुजेन कण्ठशोषा-
दपरं किं फलमिहाप्यते भूमौ ॥ ९४ ॥

तस्मान्नैगम[2]वचसां
मालिकया मुखरितास्य इह मनुजः ।
चरणसरोरुहयोस्ते
सेवां कलयेदमेयसुखदात्रीम् ॥ ९५ ॥

यद्यधिकारो न स्यात्
तैत्र[3] तु पौराणिकैर्नुतिवचोभिः ।
अथवा केवलवचनैः
प्रणतिपरैस्तव निषेव्यमज! चरणम् ॥ ९६ ॥

---

१. अञ्जलिबन्धः. २. वैदिकवाचाम्. ३. वैदिकवचस्सु.

मनसाप्यजित! शरीरी
तव चरणसरोजयोस्तथा सेवाम् ।
सुदृढतरेण विदध्यात्
सर्ववरिष्ठामशेषलोकगुरो! ॥ ९७ ॥

न चलति करणसमूहो
यस्य व्यापारमन्तरा लोके ।
मनसा तेनैव कृता
तव पदसेवा रमेश! मुख्यतमा ॥ ९८ ॥

तस्माद् विषयसमूहात्
सहसेदं सन्निवर्त्त्य ननु हृदयम् ।
पङ्कजनाभ! तवाङ्घ्रि-
द्वन्द्वनिषेवारतं सदा कलयेत् ॥ ९९ ॥

करणत्रितयेनैवं
पदकमलं ते निषेवते यो वा ।
इह च परत्र च सोऽयं
शर्म परं प्राप्नुयादसन्दिग्धम् ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्याम्
अष्टमशतकम् ।

---

## अथ नवमशतकम् ।

स्यानन्दूराधीश! वक्ष्याम्यथाहं
भक्तिं सद्यः पञ्चमीं कैटभारे! ।
भाग्यप्राप्यां तावकीनार्चनाख्यां
विश्वोत्कृष्टां नाथ! सर्वार्थदात्रीम् ॥ १ ॥

काहं शौरे! मन्दबुद्धिर्निकामं
  क्वासौ भूमा[1] तावकीनार्चनस्य ।
देवाथापि प्रेरयेत् त्वत्कृपा मे
  वाणीं यद्वत् तद्वदेतां[2] ब्रवीमि ॥ २ ॥

देवाः सेन्द्रास्तापसास्त्यक्तमोहा
  यद्दै नित्यं प्रार्थयन्ते निकामम् ।
तस्माल्लक्ष्मीनायकाभ्यर्चनात् ते
  कोऽन्यो लाभः केशवास्ते वरीयान् ॥ ३ ॥

तस्मात् सम्प्राप्येह देहां नरत्व
  तत्राप्यम्भोजाक्ष! मुख्यं द्विजत्वम् ।
यो वा धत्ते नित्यमाराधने ते
  वाञ्छां सोऽयं धन्यधन्योऽत्र नूनम् ॥ ४ ॥

जन्मन्यद्धा पाणयो वै परस्मिन्[3]
  येषां पूजां चक्रिरे न त्वदीयाम् ।
जायन्ते ते चक्रवर्त्त्येकयोग्यै-
  श्चिह्नैर्भास्वत्पाणिपद्माः कथं वा ॥ ५ ॥

किञ्च श्रीमन्! सार्थकत्वं हि पाणे-
  र्मर्त्योऽयं ते प्राप्नुयात् पूजयैव ।
नो चेदुच्चैर्जृम्भितानां तरूणां
  शाखाभ्यः कस्तस्य[4] जागर्ति भेदः ॥ ६ ॥

---

१. महिमा. २. भक्तिम्. ३. अन्यस्मिन् अतीते इत्यर्थः. ४ पाणेः.

त्वामाराध्य श्रीपते! विश्वनाथं
प्रीतिं लब्धुं शक्नुयादत्र कस्ते ।
किन्तु [1]स्फूर्जद्भक्तवात्सल्यभावाद्
[2]गृह्णीषे[3]ऽर्चामल्पिकामप्यनल्पाम् ॥ ७ ॥

नालङ्कारो लेपनं नो निवेद्यं
नो वा नूनं गीतवादित्रघोषः ।
सम्प्रीत्यै स्यादङ्ग! ते भक्तिदत्तं
यत् किञ्चित् त्वं मन्यसे वस्तु पूर्णम् ॥ ८ ॥

किं मार्त्तण्डस्तेजसामेकधाम
प्रीतो नास्ते दीपनीराजनाभिः ।
सिन्धुस्तद्वच्चार्पितैः स्नानकाले
रत्नैस्तुष्येत् किं न रत्नाकरोऽपि ॥ ९ ॥

श्रीमंस्तद्वल्लोकपालैरशेषै-
रप्यत्यर्थं पूजितस्त्वं मुरारे! ।
पूजायामप्यस्मदाद्यैः कृताया-
मज्ञैर्नित्यं तुष्यसि ह्यस्तशङ्कम् ॥ १० ॥

तस्माद्यावच्छक्ति मर्त्यैरशेषैः
पूजायां ते पूजितस्याखिलेशैः ।
द्रागालम्ब्यं जागरूकत्वमद्धा
नित्यं श्रेयोलिप्सुभिः शार्ङ्गपाणे! ॥ ११ ॥

---

१. स्फूर्जद् भक्तेषु वात्सल्यं यस्य तस्य भावात्. २. गणयसीत्यर्थः.
३. पूजाम्.

लक्ष्मीजाने! वक्तुमद्यारभेऽहं
किञ्चित् पाथोजाक्ष! पूजाविधिं ते ।
भक्तोत्तंसायोद्धवायोपदिष्टं
कारुण्याम्भोराशिनाहो त्वयैव ॥ १२ ॥

त्वत्पूजायां लोलुपोऽथ द्विजन्मा
मर्त्यो लोके स्वीयशाखानुसारात् ।
युक्ते काले तूपनीतो मुहूर्त्ते
ब्राह्मे तु स्यादुत्थितः शार्ङ्गपाणे! ॥ १३ ॥

कृत्वा पश्चाद् दन्तसंक्षालनाद्यं
गृह्णन्मृत्स्नां वैदिकैस्तान्त्रिकैश्च ।
मन्त्रैः कृत्वा प्रोक्षणादीनि सम्यक्
स्नातः सन्ध्यावन्दनादीनि कुर्यात् ॥ १४ ॥

भूयो विष्णुं पूजयामीति कृत्वा
सङ्कल्पं ते प्रारभेताङ्ग! पूजाम् ।
सम्प्राप्याराद् देवगेहं च पूजा-
सम्भारांस्ते साधु सम्भृत्य मर्त्यः ॥ १५ ॥

शैली तद्वद् दारुरूपा च लौही
लेप्या[1] लेख्या सैकती हृन्मयी च ।
दैत्याराते! रत्नमय्यप्यथैवं
ह्यष्टास्वद्धा पूजयेन्मूर्त्तिषु त्वाम् ॥ १६ ॥

तासु श्रीमंस्त्वां तिसृष्वादिमासु
प्रार्चन् भक्त्या रत्नमय्यां च मूर्त्तौ ।

---

१. सुधादिकल्पिता.

निर्माल्योद्वासं विधायाथ मन्त्रैः
पुंसूक्ताद्यैस्तेऽभिषेकं च कुर्यात् ॥ १७ ॥

लेप्यालेख्यासैकतीष्वत्र भूमन्!
कृत्वा मर्त्यः केवलं [1]मार्जनं च ।
गन्धैः पुष्पैर्भूषितायास्तु मूर्त्ते-
स्तिष्ठेद् भागे दक्षिणे पूजकस्ते ॥ १८ ॥

पाणौ सन्धार्याथ सव्ये पवित्रं
[2]गुर्वादीनप्याशु संवन्द्य पाणिम् ।
संशोध्यारादस्त्रमन्त्रेण कुर्या-
[3]न्मैन्त्रात्मानौ मूलमन्त्रेण हस्तौ ॥ १९ ॥

कृत्वा ताभ्यां च [4]त्रितालादिकं वै
[5]भास्वत्सङ्ख्यैर्मानसोङ्कारलापैः ।
प्राणायामं संविधायाथ नासा-
निष्ठा नाडीः शोधयेत् [6]पिङ्गलाद्याः ॥ २० ॥

पश्चात् कुर्वन् रेचकं [7]द्व्यष्टवारं
जप्त्वोङ्कारं साध्वथो [8]पूरकं च ।

---

१. मार्जनं केवलं, न त्वभिषेकम्. २. आदिपदग्राह्या विनायकादयः. ३. 'मूलव्यापकतो वरौ मनुमयौ हस्तौ समुत्पाद्य च' इति तन्त्रसमुच्चयः. ४. आदिपदाद् दिग्बन्धादि ग्राह्यम् 'अस्त्रेणातनुयात् त्रितालदशदिग्बन्धाग्निसालोदयान्' (तन्त्रसमुच्चयः). ५. द्वादशभिः. ६. आद्यपदादिडासुषुम्नयोर्ग्रहणम्. 'समीरयामविधिना संशोध्य नाडीत्रयम्'.(तन्त्रसमु.) ७. षोडशकृत्वः. 'प्रभञ्जनं पिङ्गलया बहिस्त्यजेद् विकारसङ्ख्यैः प्रणवैरथेडया । प्रपूरयेत् तद्द्विगुणैः प्रभञ्जनं प्रपूरितं ब्रह्मपथे प्रकुम्भयेत् ॥' (तन्त्रसमु). ८. पूरकं कुर्वन् द्वात्रिंशद्वारं ओङ्कारं जप्त्वेति योजना.

द्वात्रिंशद्वारं चतुष्षष्टिवारं
कुम्भं[2] कुर्यादर्चकस्ते मुरारे! ॥ २१ ॥

भूयश्चासौ भावयन्नात्मसाम्यं[3]
जीवस्याहो हंसमन्त्रं च जप्त्वा।
जीवं पश्चाद्योजयेदात्मनीशे[4]
त्वामभ्यर्चन् बाढमेकाग्रचेताः ॥ २२ ॥

दैत्याराते! पञ्चभूतान्यथासौ
पादाग्रादिष्वङ्गकेषु स्थितानि[5]।
तत्तन्मन्त्रैर्वै क्रमेणाच्युत! भ्रू-
मध्यस्थायां संहरेच्च[6] प्रकृत्याम् ॥ २३ ॥

तां च श्रीमन्! सोऽथ तन्मन्त्रपूर्वं
संहृत्याराच्छ्रीपरात्मन्युपेन्द्र!।
कुर्यात् पश्चाद् देहसंशोषणाद्यं[7]
कर्म श्रेष्ठं वक्ष्यमाणक्रमेण ॥ २४ ॥

वायोर्बीजेनाङ्गमुच्छोष्य वह्ने-
र्बीजेनाभिप्लोष्य बीजेन चापाम्।

---

१. चतुष्षष्टिवारमोङ्कारं जपन् कुम्भकं कुर्यादिति योज्यम्. २. कुम्भकम्. ३. आत्मना परमेश्वरेण साम्यम्. 'एवं कुम्भककर्मणा स्वपरमैश्वर्यं सुधीर्भावयेत्। उन्नीय हंसमनुनाधरचक्रतस्तमर्कोम्बुजस्थपरमात्मनि सङ्गमय्य ॥' (तन्त्रसमुच्चयः) ४. सङ्गमयेत्. ५. 'पादाग्रनाभिहृदयाब्जशिरोधितालुदेशस्थितानि पृथिवीप्रमुखानि पञ्च' (तन्त्रसमुच्चयः). ६. स्वस्वकारणेषु प्रविलापयेत्. 'संहृत्यैवं क्षितिं वारि तदनल इमं मातरिश्वन्यमुं खे' इत्यादि (तन्त्रसमुच्चयः). ७. आद्यपदात् प्लोषणं प्लावनं च ग्राह्यम्.

संप्लाव्यात्यन्तं घनीकृत्य पृ[१]थ्व्या
रै[२]न्ध्रीकुर्यात् खस्य बीजेन सोऽयम् ॥ २५ ॥

सङ्कल्प्याहो दिव्यदेहं च पश्चा-
ज्जप्त्वोङ्कारं चान्तरावेश्य जीवम् ।
संहारस्य [३]व्युत्क्रमेणेह सृष्टिं
कुर्यान्मायायाश्च भूतोत्करस्य ॥ २६ ॥

प्राणायामेनालमोङ्कारयुक्ते-
नाण्डं निर्भिद्यायमंशौ तदीयौ ।
[४]सङ्कल्प्याथो रो[५]दसी चक्रपाणे!
प्राणायामं चापि कुर्यान्मुरारे! ॥ २७ ॥

बाह्योर्देहे चाथ वि[६]न्यस्य वर्णं
वर्णात्मानं भावयन्नीश! देहम् ।
जीवं मूर्धस्थे परात्मन्यथासौ
दैत्याराते! योजयेदर्चकस्ते ॥ २८ ॥

मन्त्रात्मानं भावयन्मूलमन्त्रे-
णैनं पश्चादच्युता[७]वेश्य चान्तः ।
प्राणायामेनेशरूपस्य जीव-
स्याथो देहं कल्पयेत् स्थूलसूक्ष्मम् ॥ २९ ॥

---

१. पृथ्व्या बीजेन घनीकृत्येति योज्यम्. २. 'काठिन्यरन्ध्रीकरणे विधाय स्वबीजतः' (तन्त्रसमुच्चयः). ३. संहारक्रमवैपरीत्येन. ४. ध्यात्वा. ५. द्यावाभूमी. इदं तदन्तर्ध्येयपुरुषस्याप्युपलक्षणं, तद्ध्यानस्यापि तन्त्रसमुच्चयेऽभिधानात्. ६. बाह्वोरक्षरन्यासमुक्त्वा 'आकेशादापदाम्भोजं लिप्या संव्यापयेत् तनौ' इति तन्त्रसमुच्चयः. ७. निवेश्य. निवेशितस्य चास्य पीठपूजानन्तरं बिम्बे आवाहनं ४४ श्लोके वक्ष्यते.

उत्पाद्याथो तत्परीवारवृन्दं
　　तस्य स्थित्यै पूर्वमुक्तक्रमेण ।
विन्यस्याम्भोजाक्ष! गुर्वादिकान् वै
　　तत्तत्स्थानेष्वर्चयेदीश! पीठम् ॥ ३० ॥

पीठे तास्मिन् सुस्थितस्येशितुर्वै
　　तेजोव्याप्तं भावयन् पाणियुग्मम् ।
पश्चात् तेन [1]व्यापकोपेतमङ्घ्रा
　　न्यस्येद् देहे देव! बाह्योश्च वर्णम् ॥ ३१ ॥

पश्चाद् भूमन्! [2]पञ्चतत्त्वानि तद्वद्
　　दैत्याराते! [3]मूलमन्त्राक्षराणि ।
[4]अष्टाङ्गं चाप्यत्र [5]पञ्चाङ्गकञ्च
　　न्यस्येत् स्फूर्जद्भक्तिरीशार्चकस्ते ॥ ३२ ॥

भूयः श्रीमन्! शङ्खचक्राब्जकौमो-
　　दक्यादीन्यप्यत्र दिव्यायुधानि ।
कोटीरोत्तंसोरुकेयूरहारा-
　　दीनि न्यस्येदर्चको भूषणानि ॥ ३३ ॥

लक्ष्मीं भूमीं चाथ तैस्तैश्च मन्त्रै-
　　र्मुद्राभिश्चाप्यङ्ग! विन्यस्य पश्चात् ।
विध्युक्तां तां सम्प्रकुर्वीत सोऽयं
　　दैत्याराते! मानसीमीश! पूजाम् ॥ ३४ ॥

---

१. मूलमन्त्रोपेतम्. २. पृथिव्यादीनि. ३. मूलमन्त्राक्षरसहितानी-त्यर्थः. ४. 'दोर्भ्यां पदाभ्यामंसाभ्यामुरसा शिरसा दृशा । वचसा मनसा चेति' उक्ताष्टाङ्गयुक्तामिति क्रियाविशेषणम्. ५. 'बाहुभ्यां च सजानुभ्यामुरसा शिरसा दृशा' इति पञ्चाङ्गानि.

जप्त्वा यावच्छक्ति ते मूलमन्त्रं
सद्यः पूजामारभेताथ बाह्याम् ।
प्रेमोद्रेकात् त्वय्यशेषाधिनाथे
कारुण्याब्धौ बाढमेकाग्रचेताः ॥ ३५ ॥

भूयः सोऽयं पूर्वमुक्तक्रमेणै-
वाम्भःपूर्णं साधु सम्पूज्य कुम्भम् ।
कृत्वा शौरे! शङ्खसम्पूरणं वै
कुर्यात् पश्चादादरादात्मपूजाम् ॥ ३६ ॥

तत्तद्द्रव्यैस्त्रीणि पात्राणि पूर्णा-
न्यद्धा विन्यस्यार्घ्यपाद्याचमार्थम्[1] ।
सद्यः शौरे! पीठपूजां प्रकुर्यात्
त्वत्पूजायाः पूर्वमेवाखिलात्मन्! ॥ ३७ ॥

भागे पीठस्योत्तरे देशिकं[2] च
ध्यायेत् तद्वद् दक्षिणे वारणास्यम् ।
भागे चाधस्तद्वदाधारशक्तिं
मायां कूर्मं चाप्यनन्तं च पृथ्वीं ॥ ३८ ॥

तद्वत् पीठस्योपरिष्टान्मुरारे!
धर्मज्ञानादीं[3]स्तदन्यां[4]श्च भूयः ।
पादस्थानत्वं किलाप्तान् यथावद्
ध्यायेत् सोऽयं दिक्षु भूयो विदिक्षु ॥ ३९ ॥

---

१. आचमेत्यस्य आचमनेत्यर्थः. २. गुरुम्. ३. आदिपदाद् वैराग्यैश्वर्ययोर्ग्रहणम्. ४. अधर्मादीन्.

पश्चाद् भूमंस्तद् गुणानां त्रयं वै
सूत्रस्थानापन्नमद्धा विभाव्य ।
मायां विद्यां चालमाच्छादनार्थं
वस्त्रस्थानत्वं किलाप्ते स्मरेत् सः ॥ ४० ॥

ध्यायेत् तस्याथोपरिष्टादनन्तं
युक्तं पद्मं त्वष्टभिर्वै दलैश्च ।
सूर्यं[2] सोमं वह्निमात्मान्तरात्मा-[3]
दीनप्यद्धा विष्वगाराधकस्ते ॥ ४१ ॥

ध्यायेत् सोऽयं तद्दलेष्वत्र भूमं-
स्तद्वच्चाहो कर्णिकायां क्रमेण ।
शौरे! शक्तीर्वै नव प्रेमभारौ-
त्कण्ठ्यान्नित्यं न्यस्तचेतास्त्वयीशे ॥ ४२ ॥

एवम्भूतां तां समष्टिं मुरारे!
पीठस्याहो तोयगन्धप्रसूनैः ।
तद्वत् पूतैर्धूपदीपाम्बुभिश्चा-
प्येष श्रीमन्! पूजयेत् पूजकस्ते ॥ ४३ ॥

पश्चान्मूर्त्तौ नाथ! पीठस्थितायां
चेतोमध्याद् देवमावाह्य सद्यः ।
पूर्वं तावद् देहशुद्ध्युक्तरीत्या
न्यस्येद् भूषाहेतिमुख्यान्यथासौ ॥ ४४ ॥

---

१. सत्त्वरजस्तमसाम्. २. सूर्यादयश्चाष्ट. ३. आदिपदग्राह्या जीवात्मादयः.

पश्चाच्चासावासनस्वागतादि
स्फूर्जत्प्रेम्णा वै समर्प्याभिषेकम् ।
कुर्यात् तोयेनातिसौरभ्यभाजा
पुंसूक्तादींस्त्रीन् समुच्चार्य मन्त्रान् ॥ ४५ ॥

भूयो वस्त्रं भूषणं चोपवीतं
गन्धं पुष्पं चार्चकोऽसौ समर्प्य ।
युक्तं देवं पञ्चकेनावृतीनां
लक्ष्मीजाने! पूजयेदुक्तरीत्या ॥ ४६ ॥

एकीकुर्वंस्तत्परीवारमीशे
यावच्छक्ति श्रीश! कुर्वन् निवेद्यम् ।
मध्ये वह्नेर्होमकर्मादि कुर्यात्
तद्वद्विप्रान् साधु सम्भोजयेच्च ॥ ४७ ॥

विष्वक्सेनायार्पयंस्तन्निवेद्यं
गण्डूषास्यक्षालनैरास्यवासैः ।
गीतैर्नृत्याद्यैश्च सन्तोष्य देवं
कुर्यात् पश्चादाशु पूजां प्रसन्नाम् ॥ ४८ ॥

भूयश्चापूपादि शक्त्या निवेद्य
[2]प्रेष्ठैर्मन्त्रैः साधु पुष्पाञ्जलिं च ।
कृत्वा यावच्छक्त्यहो मूलमन्त्रं
जप्त्वा कुर्यादर्पणं वै जपस्य ॥ ४९ ॥

नत्वा ब्रह्मण्यर्पयंश्च प्रसन्नं
दत्वाथार्घ्यं शङ्खतोयेन पश्चात् ।

---

१. मुखाधिवासनैः. २. भगवत्प्रियतमैः.

प्रोक्ष्य स्वीयान् स्वं तथान्याघ्यंदायी
कुर्वन् पूजां पूरयेद् वै लयाङ्गम् ॥ ५० ॥

एवं भक्त्या नित्यमाराधयेद्य-
स्त्वामाराध्यं नाथ! विश्वैकनाथैः ।
सोऽयं पापैर्दूरितो हन्त सर्वै-
र्नूनं शर्म प्राप्नुयान्निर्मलं तत् ॥ ५१ ॥

तत्रापि त्वामर्चयन् श्रीतुलस्याः
पत्रैरेष श्यामलैः कोमलैस्ते ।
प्रीतिं दत्ते यादृशीं तादृशीं न
त्वामाराध्यन् कैश्चिदन्यप्रसूनः ॥ ५२ ॥

त्यक्त्वा तावत् पारिजातादिपुष्पै-
रप्यानन्दास्त्वं स्रजो विश्वहृद्याः ।
धत्से नित्यं यां कथं नाम वीरु-
त्स्वेषा गण्या स्यात् तुलस्यार्तबन्धो! ॥ ५३ ॥

त्वद्भक्तः किं मानुषेष्वत्र गण्यो
गण्यः किं वा पक्षिजातौ गरुत्मान् ।
गण्या शौरे! स्यात् कथं सा तुलस्य-
प्यङ्ग! प्रेष्ठा तेऽत्र वीरुद्गणेषु ॥ ५४ ॥

संवादोऽभूद्यः पुरा शक्तिसूनो-
र्मार्कण्डेयस्यापि विश्वैकबन्धो! ।
माहात्म्याविष्कारकः श्रीतुलस्या-
स्तं वक्ष्येऽद्य त्वत्कृपावैभवेन ॥ ५५ ॥

---

१. समाप्त्यङ्गम्.

गाङ्गे तावत् सैकते वै वसिष्ठा-
दीनां पूर्वं सङ्गतानां मुनीनाम् ।
ज्ञातुं श्रेयो वाञ्छतामस्य लोक-
स्यासीद् भूमन्! कोऽपि संवाद एवम् ॥ ५६ ॥

किं वा श्रेयः पूरुषाणां प्रियं किं
लक्ष्मीजानेः कोऽत्र जीवत्यमोघम् ।
को वा देवः सेवितः सर्वदोषान्
निर्हन्त्यस्य प्राणिजालस्य चेति ॥ ५७ ॥

मार्कण्डेयः सप्तकल्पान्तजीवी
प्राप्तस्तावत् सर्वसन्देहहारी ।
पूर्वोक्तैस्तैस्तापसैः पूजितोऽसौ
प्रीत्याभीक्ष्णं तत्र चोपाविवेश[1] ॥ ५८ ॥

सोऽयं तेषां संशयौघं जिहीर्षु-
र्दृष्ट्वासीनं वै वसिष्ठाङ्कदेशे ।
शक्तेः पुत्रं[2] सप्तवर्षं त्वदीय-
स्मृत्या धन्यं तूत्थितस्तं ववन्दे ॥ ५९ ॥

मार्कण्डेयं स्वं नमन्तं सदस्यान्
कृत्वात्यन्तं विस्मितान् भूरिवृद्धम् ।
दृष्ट्वा भीतस्तं प्रणम्यायमुत्था-
प्यैतद्वाक्यं प्रश्रितः सञ्जगाद ॥ ६० ॥

वन्द्यो ज्यायांस्त्वं मया नेह बालः
सोऽहं वृद्धैर्जातुचित् त्वादृशैस्तु ।

---

१. उपाविष्टः. २. पराशरम्.

धुन्यः सर्वास्त्वाश्रयन्त्येव सिन्धुं
सिन्धुः कामप्यापगामाश्रयेत् किम् ॥ ६१ ॥

मार्कण्डेयस्तावदूचे तथा चे-
दायुर्गण्यं त्वावयोरद्य सद्यः ।
श्रुत्वाथैतच्छक्तिसूनुर्बभाषे
काहं बालः कातिवृद्धो भवांश्च ॥ ६२ ॥

श्रुत्वाथेदं भाषितं शक्तिसूनो-
स्तेषां मध्ये तापसाग्रेसराणाम् ।
मार्कण्डेयस्तं प्रहस्याबभाषे
वाणीमेनां वक्ष्यमाणां वरेण्याम् ॥ ६३ ॥

यद्वल्लोके साधु हित्वा बुसौघं
शुद्धस्तावन्मीयते धान्यराशिः ।
एवं शौरेर्ध्यानरिक्तं सुवन्ध्यं
कालं त्यक्त्वा गण्यमायुर्नराणाम् ॥ ६४ ॥

तस्माद्विष्णोर्ध्यानधन्यं यदायु-
र्वन्द्यः सोऽयं वीतसन्देहलेशम् ।
बालोऽपि त्वं जातुचिच्चानपेतः
शौरेः स्मृत्या यत् ततः सर्ववन्द्यः ॥ ६५ ॥

जात्यैवात्यन्तालसोऽहं कदाचिद्
युक्तः स्मृत्या दिव्यया कैटभारेः ।
तस्मान्मत्तो न्यूनवर्षोऽपि स त्वं
वन्द्यो नूनं मे परं ज्यायसोऽपि ॥ ६६ ॥

तस्माद् बालो ह्रस्वकायोऽपि मर्त्यो
वन्द्यो वृद्धैरप्यहो विष्णुभक्तः ।
यद्वत् साम्यं श्रीतुलस्या महिम्ना
प्राप्तुं शक्ता नो महान्तोऽपि वृक्षाः ॥ ६७ ॥

को वा शक्तो वक्तुमत्रानुभावं
विश्वोत्कृष्टं भूतले श्रीतुलस्याः ।
याभूच्छ्रेष्ठा सर्ववीरुद्गणेभ्यो
ह्रस्वापि श्रीचक्रपाणेः प्रिया च ॥ ६८ ॥

लक्ष्मीनाथः कल्पवृक्षप्रसूना-
न्यप्युज्झित्वा भूरिगन्धावहानि ।
धत्ते नित्यं वक्षसा यां सहर्षं
सेयं मान्या स्यान्न केनेह पुंसा ॥ ६९ ॥

इत्युक्त्वासौ श्रीतुलस्या महत्त्वं
मार्कण्डेयस्तद्दृढीकर्तुकामः ।
तेषां मध्ये तापसाग्रेसराणा-
मेनां गाथां वक्ष्यमाणां न्यगादीत् ॥ ७० ॥

आसीत् पूर्वं कृष्णको नाम विप्र-
स्त्यक्ताशेषस्वीयधर्मः खलात्मा ।
मूढः क्षेत्राजीवको हन्त नित्यं
गर्ह्यः सर्वैर्हिंसकः प्राणिनां च ॥ ७१ ॥

नो जानीते तद्रसज्ञा मुरारे-
र्नामैकं वा गर्ह्यसल्लापवर्जम् ।

नो वा बाहू वन्दनं विश्वभर्तु-
हिंसावर्जं प्राणिनां दैन्यभाजाम् ॥ ७२ ॥

प्रातर्भुक्त्वा यातयामं बतान्नं
यातोऽरण्यं त्वेकदासौ निकेतात् ।
कञ्चित् कालं पर्यटंस्तत्रतत्र
द्रागाजह्रे भूरि नूनं तृणौघम् ॥ ७३ ॥

भूयः सोऽयं शाकसम्पादनार्थं
तत्रैवाहो सञ्चरन् काननान्ते ।
आलोकिष्टोच्चैर्वनं श्रीतुलस्या
दिष्ट्या रम्यं निर्जरेन्द्रोपलाभम् ॥ ७४ ॥

सर्वोत्कृष्टां साहितीं यद्वदज्ञो
रत्नं यद्वद् भूरिमूल्यं विचक्षुः ।
यद्वद्भोज्यं स्वाद्वलं रासभो वा
तन्माहात्म्यं कृष्णको न व्यजानात् ॥ ७५ ॥

भौमं तोयं चातको हन्त यद्वद्
यद्वद् गीतं जातिबाधिर्यशाली ।
यद्वद् रुग्णो भोज्यवस्तूनि तद्वत्
तन्माहात्म्यं वेद न ब्रह्मबन्धुः[1] ॥ ७६ ॥

यद्यप्येवं सस्पृहोऽथापि तस्यां
पश्यन् नृणां नो गवां चोपयोगम् ।
तां दास्ये मत्सन्निधिस्थाय विप्रा-
येति ध्यायन् प्राप तस्याः समीपम् ॥ ७७ ॥

---

१. ब्राह्मणाधमः.

तावद्विप्रं तं बतासन्नमृत्युं
नेतुं प्राप्ता याम्यदूताः किलाष्टौ ।
स्पर्शात् प्रागेवामुमद्धा तुलस्या
दंष्टुं कश्चिद्व्यालमूचुः क्षणेन ॥ ७८ ॥

विप्रस्तावत् तं नजानन् निदेशं
दैवात् सर्पस्यागतेः पूर्वमेव ।
जग्राहाल्पं भागमारात् तुलस्या-
स्तन्माहात्म्यस्तोमलेशानभिज्ञः ॥ ७९ ॥

तावज्ज्वालाध्वस्तगाढान्धकारं
दैतेयासृक्पङ्कशोणाग्रभागम् ।
विष्णोश्चक्रं स्पर्शपूतं तुलस्याः
पातुं विप्रं प्राप दृश्येतरत् सत् ॥ ८० ॥

सन्त्यक्तायां श्रीतुलस्यां हनिष्या-
म्येनं विप्रं द्रागिति व्याल एषः ।
आसीत् सद्यः सम्प्रविष्टस्तृणान्त-
र्याम्या दूताश्चान्वयुस्तं क्षणेन ॥ ८१ ॥

अज्ञात्वेदं हन्त विप्रस्तृणानां
राशिं मूर्ध्नासौ वहन् गूढसर्पम् ।
चक्रज्योतिर्भीतदूरापयातै-
र्युक्तो याम्यैराविवेश स्वगेहम् ॥ ८२ ॥

काले तस्मिंस्तद्गृहद्वारि तिष्ठन्
विप्रोत्तंसः कोऽपि कृष्णार्चकोऽथ ।

---

१. चोदितवन्तः.

यास्यान् दूतान् दिव्यदृग्भाङ् मुदा तान्
पप्रच्छैवं कृष्णकाभ्यर्णवासी ॥ ८३ ॥

भो भो याम्याः! किङ्करा यूयमत्र
प्राप्ताः कस्मात् कृष्णकेनाङ्ग! साकम् ।
मह्यं ब्रूतात्यन्तजिज्ञासमाना-
येत्यादिष्टास्ते किलोचुः समस्तम् ॥ ८४ ॥

स्वेषां विप्रं कृष्णकं नेतुमाप्तिं[1]
कृत्यं चाहेः स्वानुशिष्टस्य रक्षाम् ।
चक्रेणास्य[2] स्पर्शतः श्रीतुलस्या-
स्तस्यास्त्यागे नेतुमिच्छां तथा तम्[3] ॥ ८५ ॥

श्रुत्वा वाणीमीरितां याम्यदूतैः
सद्यः सम्भूतानुकम्पारसार्द्रैः ।
रक्षोपायं तस्य हि ब्रह्मबन्धोः
पप्रच्छामूनेव कृष्णार्चकोऽसौ ॥ ८६ ॥

ऊचुस्तावत् ते फलं दास्यसि त्वं
यद्येकस्या नस्तुलस्यर्चनायाः ।
मुञ्चामोऽमुं[4] सोऽकरोत् तद्ददध्वा
जग्मुर्दूताश्चोरगः स्वं निकेतम् ॥ ८७ ॥

दृष्ट्वाथैतद् विस्मितायैष तस्मै
वृत्तं शंसन् जातबोधेन तेन ।

१. आगमनमित्यर्थः. २. कृष्णकस्य. ३. कृष्णकम्. ४. इति-शब्दार्थो गम्यः.

भेजे किञ्चिद्वैष्णवक्षेत्रमारा-
ध्याजं मुक्तिं प्रापतुस्तौ तुलस्या ॥ ८८ ॥

एनां गाथां शक्तिसूनुं मुनीनां
मध्ये तेषां शृण्वतां भक्तिभाजाम् ।
मार्कण्डेयः सञ्जगादानुभावं
विश्वोत्कृष्टं द्योतयन्तीं तुलस्याः ॥ ८९ ॥

श्रुत्वा सर्वं वृत्तमेतन्मुनीन्द्राः
सर्वज्ञास्ते हर्षरोमाञ्चिताङ्गाः ।
मार्कण्डेयं प्रत्यनन्दंस्तदास्य-
च्योतद्गाथास्वादतृप्तिं विनैव ॥ ९० ॥

तस्मात् सेव्या त्वत्पदाब्जप्रियैषा
नित्यं मर्त्येनेह सर्वार्थसिद्ध्यै ।
त्यक्त्वा वीरुद्बुद्धिमस्यां सुतीर्थे-
ष्वद्धा यद्वत् तोयबुद्धिं विगर्ह्याम् ॥ ९१ ॥

नूनं तावत् त्र्यक्षरी सा तुलस्या-
ख्यासावाम्नायत्रयीतोऽपि गुर्वी ।
यं त्वां नित्यं सेवते हि द्वितीया
स त्वं प्रीत्या यद्भजस्यच्युताद्याम् ॥ ९२ ॥

देशे मेध्ये लोमकीटास्थिरिक्ते
प्राग्विस्तीर्णं संविधायालवालम् ।
बीजावापं श्रीतुलस्याः प्रकुर्यात्
तस्मिन् पूतो मानुषोऽन्तर्बहिश्च ॥ ९३ ॥

प्रातस्स्नायं शीतलेनाम्भसा ता-
मासिञ्चंस्तत्पत्रसम्पर्कपूतम् ।
तोयं मूर्ध्ना चोद्वहेन्मृग्यमद्धा
ब्रह्मेशामर्त्याधिपैः सर्षिसिद्धैः ॥ ९४ ॥

सायं कुर्वन्नेतदीयालवाल-
स्यालङ्कारं दीपमालाविशेषैः ।
भक्त्याभीक्ष्णं तां परिक्रम्य नत्वा
यावच्छक्ति प्रार्थयेदच्युतैवम् ॥ ९५ ॥

भो भो देवि! श्रीतुलस्यच्युताङ्घ्रि-
द्वन्द्वाम्भोजैकासवास्वादधन्ये ।
संसाराम्भोराशिमग्नं सुदीनं
कारुण्यान्मामुद्धरेत्युल्लपेच्च ॥ ९६ ॥

एकादश्यां वै विशेषेण तस्या
मूले रात्रिं यापयेदप्रमत्तः ।
सार्धं सद्भिस्त्वत्कथामृष्टपीयू-
षास्वादात्यन्तानुरक्तैः सुधन्यैः ॥ ९७ ॥

तन्मूलस्थां किञ्च मृत्स्नां सुपुण्यां
तद्वन्मूर्ध्ना चावहन्नेष मर्त्यः ।
मुक्तो हि स्यात् पातकेभ्योऽखिलेभ्यः
कारुण्यात् ते नात्र कार्यो विचारः ॥ ९८ ॥

किं भूयोभिर्भाषितैस्त्वत्पदाब्ज-
स्पर्शाढ्यन्यां नाथ! विश्वं पुनन्तीम् ।

१. प्रदक्षिणीकृत्य.

एनां नित्यं सेवमानो हि शर्म
  श्रीमन् नूनं प्राप्नुयाद्धानिहीनम् ॥ ९९ ॥

तस्मादेवम्भूतया श्रीतुलस्या
  धन्यैरन्यैः सङ्गतोऽस्याः प्रसूनैः ।
यो नित्यं त्वामर्चयेदुक्तरीत्या
  कस्तत्पुण्यं वक्तुमीष्टे धरायाम् ॥ १०० ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्याम्
नवमशतकम् ।

## अथ दशमशतकम् ।

वदाम्यथाम्भोरुहनाभ! षष्ठीं
  भक्तिं भवद्वन्दनरूपिणीं ताम् ।
तदर्थमुर्वीकमलेश! वाणीं
  विधेहि दासस्य पटीयसीं मे ॥ १ ॥

विरिञ्चिशर्वामरनायकाद्या
  जाता जगद्वन्द्यपदाधिरूढाः ।
त्वदङ्घ्रिनत्यैव कथं न वाञ्छया
  भवेदियं भुव्यखिलैरपापैः ॥ २ ॥

अवाप्यमन्यच्छिरसा नरस्य
  साफल्यमम्भोरुहनाभ! किं वा ।
विना प्रणामात् तव नन्वगण्य-
  पुण्यैकलभ्यादहिनाथशायिन्! ॥ ३ ॥

---

१. सङ्गाद्धेतोः.

हस्त्यघं यच्छति वाञ्छितार्थं
समस्तपापौघमपाकरोति ।
तनोति कल्याणपरम्पराम-
प्यधोक्षजाङ्घ्रिद्वयवन्दनं ते ॥ ४ ॥

न हेमकोटीरशतैः सुरत्नै-
र्न मूर्धजैर्वा सुमदामबद्धैः ।
अलङ्क्रिया स्याच्छिरसो यथा वै
प्रणामतस्तावकपादयुग्मे ॥ ५ ॥

वहन्नथोष्णीषकिरीटकानां
सहस्रमप्येष नरो बतान्ते[1] ।
सुघोरवैवस्वतदण्डघातं
निरोद्धुमेतेन[2] भवेत् पटुः किम् ॥ ६ ॥

अजानता चेदमहो[3] जनुष्मता
जडात्मना भूरिमदान्धचेतसा ।
अवाप्यते जन्मशतेषु मज्जनं
पुनःपुनर्घोरभवाब्धिवीचिषु ॥ ७ ॥

ततोऽयथा जन्तुरसौ सुदुर्लभं
प्रपद्य तन्मानवजन्म विष्टपे ।
वृथा तदेतद्विफलीकरिष्यति
ब्रवीमि चैतत् कृपया तवाधुना ॥ ८ ॥

यदा जनन्या जठरं विशत्यसौ
नरोऽसृगस्थ्यामिषकल्पिताकृतिः ।

---

१. देहापाये. २. उष्णीषादिवहनेन. ३. उक्तं वस्तुतत्त्वम्.

तदा ध्रुवं ज्ञानलवेन वर्जित-
  श्चिराय शेते स पुरीषकुण्डके ॥ ९ ॥

क्रमेण मासैर्दशभिः समुद्य-
  च्छिरोभुजोर्वङ्घ्रिमुखप्रतीकः ।
समेधते त्वत्कृपयैव तत्र
  स्थितः सुदीनः करुणैकसिन्धो! ॥ १० ॥

स्वमातृभुक्तैः कटुतिक्तकाम्ल-
  मुखै रसैराकुलितश्च नित्यम् ।
कदा बहिर्निर्गमनं मम स्या-
  दितस्त्विति ध्यायति सर्वकालम् ॥ ११ ॥

विनिर्गतोऽप्येष बहिश्च गर्भा-
  द्रुदन् जनन्याः स्तनमात्रजीवी ।
न वेत्ति नूनं भुजगानलादीन्
  स्वनाशहेतूनपि बाल्यकाले ॥ १२ ॥

स्वदेहजातामपि हन्त पीडा-
  मशक्त ईशालपितुं परस्मै ।
रुदत्यसौ वीक्ष्य मुखं स्वपित्रो-
  स्तदङ्कशायी चरणे विधून्वन् ॥ १३ ॥

रुदत्यमन्दं बहिरप्यदृश्यया
  स्तनन्धयेऽस्मिन् रुजया कयाचन ।
स्तनं ददाति क्षुधितत्वशङ्कया
  प्रसूस्तदप्यस्य गदाय कल्पते ॥ १४ ॥

---

१. स्तनदानमपि.

ततः शनैरेष रमेश! पित्रोः
परां मुदं सञ्जनयंस्तदग्रे ।
चरन्नजाव्यक्तवचांसि वक्तुं
शनैः शनैरारभतेऽब्जनाभ! ॥ १५ ॥

अयं नियुक्तोऽप्यथ पाठयोग्ये
वयस्यवाप्ते शनकैस्तदर्थम्[1] ।
गुरोरनादृत्य वचांसि खेले
मतिं विधत्ते सह नाथ! बालैः ॥ १६ ॥

तमोमयं[2] हन्त तमो[3] नराणां
प्रशान्तिमभ्येति हि विद्ययैव ।
तदर्थमुच्चैर्यतते न काले
यदीश्वर! स्यान्नु कदा तदाप्तिः[4] ॥ १७ ॥

यथैव सस्यान्यतिलङ्घ्य कालं
वृष्ट्यापि न स्युः फलवन्ति लोके ।
तथा श्रमोऽपीश! कृतः श्रुतार्थे
स्यादेव वन्ध्यो भगवन्नकाले ॥ १८ ॥

इत्थं रमानायक! बाल्यकालं
विनीय विद्यागममन्तरेण ।
उपैति तारुण्यदशां स पश्चा-
दजय्यषड्वैरिविहारभूमिम् ॥ १९ ॥

नरेण यस्यां सहसा दशायां
सम्प्रार्थनीयः खलु साधुसङ्गः ।

---

१. पाठार्थम्. २. अज्ञानमयम्. ३. तिमिरम्. ४. विद्याप्तिः.

स एष दौर्भाग्यवशेन तस्यां
निषेवते हन्त तदन्यमेव ॥ २० ॥

ततश्च वित्तार्जनलम्पटोऽसौ
चलानवाप्याशु तथाधिकारान् ।
विमुक्तभावत्कपदाब्जचिन्तः
प्रवर्तते साधुजनापकारे ॥ २१ ॥

अतृप्तिमान् भूषणचेलयान-
धनोपजीव्यावसथेषु नित्यम् ।
विहाय साध्वीं स्ववधूमनाथां
रतिं विधत्ते ननु पुंश्चलीषु ॥ २२ ॥

अवाप्तमन्यायवशेन वित्तं
वितीर्य ताभ्यो बत रिक्तहस्तः ।
शनैर्वलीकञ्चुकिताखिलाङ्गो
जरातुरो हन्त भवत्युपेन्द्र! ॥ २३ ॥

न वीक्षितुं दृष्टिरलं श्रुतिर्न
श्रोतुं सदा यष्टिरपेक्षिता च ।
त्यजन्ति पुत्राश्च वधूश्च शौरे!
नरो न कां याति शुचं जरायाम् ॥ २४ ॥

तथा स्थितो हन्त जहाति मध्यं
लोकं विकृष्टो बत याम्यदूतैः ।
अवाप्य घोरां निरये च हिंसां
पुनश्च कामप्यथ योनिमेति ॥ २५ ॥

---

१. असाधुसङ्गमेव. २. नालं न समर्था.

इति स्रगेषा जनिमृत्युरूपिणी
रमापते! नो विरमेद्यदन्तरा[1] ।
तदीश! ते पादसरोजवन्दनं
सदा विदध्यान्मनुजस्तदेकधीः ॥ २६ ॥

कृताञ्जलिश्चानतकन्धरो मनाङ्-
निमील्य नेत्रे विषयेषु लालसम्[2] ।
मनो निरुध्याङ्ग! तवाङ्घ्रिपङ्कजे
निवेश्य कुर्यात् सहसा नमस्क्रियाम् ॥ २७ ॥

उरश्शिरोनेत्रमनोवचोभिः
पद्भ्यां कराभ्यामहिनाथशायिन्! ।
तथैव कर्णद्वितयेन भक्त्या
कृता हि साष्टाङ्गनमस्क्रियोक्ता ॥ २८ ॥

इयं विधेया व्रजता त्वदालयं
नरेण भक्त्या पुरतस्तवानिशम् ।
प्रदक्षिणीकृत्य विभो! यथाविधि
स्तवोत्तमं व्याहरता पदे पदे ॥ २९ ॥

त्वदीयनामश्रवणे कथासु
प्रबोधनिद्रागमभोजनेषु ।
त्वदालयस्थोत्तमवस्तुदृष्टौ
कार्या नतिस्तावकवीक्षणे[3] च ॥ ३० ॥

इतीह यो वन्दनमाचरेत् पुमान्
लोकत्रयीवन्द्यपदाम्बुजस्य ते ।

---

१. यद्विना. २. लोलुपम्. ३. त्वद्भक्तदर्शने.

स वै कृतान्तं च तदीयकिङ्करान्
स्वप्नेऽपि नो पश्यति नात्र संशयः ॥ ३१ ॥

अथारभेऽहं सहसाभिधातुं
भक्तिं परां माधव! सप्तमीं ते ।
जगत्पते! दास्यमिति प्रतीतां
कृपां तदर्थं कुरु तावके द्राक् ॥ ३२ ॥

त्वदीयदासोऽस्म्यहमङ्ग! तुभ्यं
समर्पितं कर्म मया कृतं यत् ।
इतीह यः श्रेष्ठतमस्तु भावो
विदुर्बुधास्तां ननु दास्यभक्तिम् ॥ ३३ ॥

करोति कर्माणि यदीह चेतनः
फलेच्छया तत्फलमात्रमश्नुते ।
समर्प्य सर्वं त्वयि चेत् करोत्यसा-
वनन्तमानन्दमनन्त! विन्दति ॥ ३४ ॥

सुपर्ववेदाध्वरमन्त्रतन्त्र-
तपोव्रतादीन्यपि यन्मयानि ।
तथाविधे त्वय्यसमर्पितानि
कथं भवेयुः कुशलाय तानि ॥ ३५ ॥

यथा हुतं भस्मनि वृष्टिपातनं
यथोषरे वा रुदितं यथा वने ।
यथोपदेशश्च कृतो जडात्मने
तथैव कर्म त्वदनर्पितं भवेत् ॥ ३६ ॥

---

१. अर्थान्मयि.

यथोपकारश्च कृतः कृतघ्ने
यथा धृतो वा मुकुरोऽन्धवक्त्रे ।
यथैव घातश्च तुषस्य राशे-
स्तथैव कर्म त्वदनर्पितं स्यात् ॥ ३७ ॥

यदत्र दृष्टं यदपीश्वर! श्रुतं
यच्चानुभूतं यदधोक्षजार्जितम् ।
यदप्यधीतं च यदप्युदीरितं
त्वय्यच्युते तत्सकलं समर्पयेत् ॥ ३८ ॥

इष्टं यदम्भोरुहनाभ! यद्धुतं
यच्चापि दत्तं ननु वित्तमर्हते ।
किं वा बहूक्त्या तनुवाक्यमानसै-
र्यद्यत् कृतं त्वय्यखिलं तदर्पयेत् ॥ ३९ ॥

सरोजनाभैवमशेषकर्मा-
र्पणं मनुष्यस्त्वयि यो विधत्ते ।
न बध्यते कर्मभिरेष जातु
परं च विन्दत्यपि शर्म नित्यम् ॥ ४० ॥

अहीन्द्रशायिन्! समुदीरयामि तां
वरीयसीं भक्तिमथाहमष्टमीम् ।
त्वदीयसख्याह्वयशालिनी जवाद्
दया विधेया मयि नाथ! तत्कृते ॥ ४१ ॥

समस्तवस्तुष्वलमास्थिरेषु
निस्सारतां सम्यगवेक्ष्य बुद्ध्या ।

त्वय्येव विस्रम्भभरो यदि स्या-
न्न्यस्तो भवेदेष हिताय पन्थाः ॥ ४२ ॥

समीहमानस्य मनः स्वमास्मिन्
मार्गे स्थिरीकर्तुमधीश! जन्तोः ।
प्रत्यूहभूतानि मिथो विभिन्न-
तत्त्वानि सन्त्यङ्ग! मतानि लोके ॥ ४३ ॥

पुंसां तु येषामिह येषु येषु
शास्त्रेषु भूमन्! प्रतिपत्तिरस्ति ।
भजन्ति ते माधव! तेषु तेषु
सेव्यत्वबुद्ध्या प्रतिपाद्यभूतम् ॥ ४४ ॥

उपासते केचन शब्द एव
ब्रह्मेति कर्मेत्यणुरित्यथान्ये ।
तथा परे काल इतीह लोके
स्वाभ्यस्तशास्त्रानुगुणं मुरारे! ॥ ४५ ॥

यथारुचीत्थं बहुनामभेदै-
रुपासनास्वप्यवनौ कृतासु ।
ताः पर्यवस्यन्त्यखिलात्मकत्वात्
त्वय्येव निस्संशयमम्बुजाक्ष! ॥ ४६ ॥

अतस्त्वयीशान्यमतेष्वसक्तो
दधाति विस्रम्भभरं नरश्चेत् ।
स पालयत्येनमहो विपद्भ्यो
निश्शङ्कमुच्चैरपि दुस्तराभ्यः ॥ ४७ ॥

१. विस्रम्भभरः.

वने सुघोरे पुरुषादसेविते
महार्णवे मज्जति वायुना प्लवे ।
समीपवर्तिष्वथवाततायिषु
प्रपालयत्येनमसौ न संशयः ॥ ४८ ॥

तथामये मूर्छति चानिवार्ये
पतत्सु शस्त्रेषु रणेऽतिघोरे ।
उपागते दस्युकुले जिघांसा-
वबत्यसौ निर्विचिकित्समेनम् ॥ ४९ ॥

पुरा न के के भगवन्! महान्त-
स्त्वय्येव विस्रब्धधियोऽखिलात्मन्! ।
विमोचिता हन्त महाविपद्भ्य-
स्त्वयैव कारुण्यसुधार्णवेन ॥ ५० ॥

सुयोधनः प्राक् कुमतिर्वृकोदरं
मुखे मिथो भक्ष्यसमर्पणच्छलात् ।
अभोजयद्वै गरदुष्टमोदनं
पयोविहारेऽथ सुरापगाम्भुनि ॥ ५१ ॥

सुमूर्छितं तं पतितं च निद्रया
वशीकृतं हन्त स एष रज्जुभिः ।
निबध्य तोये शितशूलकीलिते
द्रुतं निचिक्षेप तदा दुराशयः ॥ ५२ ॥
(युग्मकम्)

अविक्षतो दिष्टबलेन शूलै
रसातलं प्राप्य स नागदंशात् ।

विनष्टपूर्वोक्तविषोऽच्युताही-
नताडयत् तान् भृशमन्युतप्तः ॥ ५३ ॥

आवेदयामासुरमी च तक्षकं
स चैत्य तं वीक्ष्य तदार्तिमानयन् ।
तस्मै ददौ कुण्डरसाष्टकं हरे![1]
निपीय सुष्वाप स[2] तत् सुखेन ॥ ५४ ॥

प्रबुद्धमेनं च विवृद्धसत्त्वं
प्रमाणकोट्याह्वयदेशमेते ।
निन्युर्भुजङ्गाः स पुरं ततोऽगात्
शुचे रिपूणां च मुदे स्वकानाम्[3] ॥ ५५ ॥

कदाचिदीर्ष्यावशगः स पार्थे
जनानुरागान्वितराज्यलक्ष्मीम् ।
सुयोधनो वीक्ष्य कणिङ्कनाम्ना
सम्मन्त्रयामास सुदुर्नयेन ॥ ५६ ॥

प्रज्ञादृशो माधव! वारणावतं
पितुर्मुखेनाशु ततः स धर्मजम् ।
सम्प्रेष्य शुश्रूषणकर्मणे छला-
न्नियोजयामास पुरोचनाह्वयम् ॥ ५७ ॥

पुरं गतास्तत् खलु धर्मजाद्याः
पुरोचनेनाथ समं खलेन ।

---

१. कुण्डाष्टकमितं रसमिति तात्पर्यम्. 'एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः' (भारतम्). २. वृकोदरः. ३. ज्ञातीनाम्.

क्रमेण लाक्षासदनं प्रविष्टा-
श्चिकीर्षितज्ञा अपि नागकेतोः[1] ॥ ५८ ॥

वसत्सु तत्रैष्वथ भीमवाचा
समेत्य तावत् खनकोऽथ कोऽपि ।
सम्प्रेषितो वै विदुरेण चक्रे
मार्गं सुरङ्गामयमाशु[2] गूढम् ॥ ५९ ॥

समीक्ष्य कालं सपुरोचनं तत्
प्लुष्ट्वा गृहं वायुसुतः सगर्भ्यैः[3] ।
निर्गत्य तेनेश! पथा हिडिम्बं
हत्वैकचक्रं पुरमध्यवात्सीत् ॥ ६० ॥

इत्थं महद्भ्योऽपि विपद्गणेभ्यो
मुक्तो हि येनैव भवेन्नरोऽसौ ।
तमीश! सख्यात्मकभक्तियोगं
त्वय्येव दध्यात् सततं मनीषी ॥ ६१ ॥

रमेश! भक्तिं नवमीमथाहं
ब्रवीमि तामात्मनिवेदनाख्याम् ।
कृपा,तदर्थं तव पद्मकोशे
दिनेशलीलां हृदि मे विधत्ताम् ॥ ६२ ॥

ममैतदित्यङ्ग! समस्तवस्तु-
ष्वत्यन्तसक्तिं सहसा विधूय ।
त्वदर्पणं यत् क्रियते विदुस्तां
भक्तिं बुधा स्वात्मनिवेदनाख्याम् ॥ ६३ ॥

---

१. दुर्योधनस्य. २. भूविवररूपम्. ३. सोदर्यैः.

अथेदृशज्ञानविहीनचित्ताः
के के भ्रमन्तो ननु कर्ममार्गे ।
पुनःपुनः संसृतिसिन्धुमग्ना
नो यान्ति कं कं भगवन्! विषादम् ॥ ६४ ॥

अहं धनी नास्ति मया समोऽन्यो
मया समस्ता रिपवोऽभिभूताः ।
इत्यूढगर्वा हृदि भावयन्ति[1]
स्वान्तस्थषट्वैरिजयेऽप्यदक्षाः ॥ ६५ ॥

अहम्पदस्यात्र किमीश! वाच्यो
देहो मनः किन्नु किमिन्द्रियाणि ।
किं वा धनागारवधूसुताद्या-
स्तटित्प्रभास्फूर्जितचञ्चलानि ॥ ६६ ॥

शरीरचेतःकरणादिकाना-
मन्तस्स्थितः प्रेरक एक आस्ते ।
त्वत्तः स भिन्नः किमुत त्वमेव
ध्रुवं त्वमेवेति महात्मनां धीः ॥ ६७ ॥

तस्माज्जगत् त्वन्मयमेव भावयन्
निरस्तवैरः सकलेषु जन्तुषु ।
सर्वात्मना त्वय्यखिलं समर्पये-
दहङ्कृतिं हन्त विसृज्य दूरतः ॥ ६८ ॥

क्रीतस्य यद्वद् गजघोटकादेः
क्रेतुर्भवेत् पोषणतत्परत्वम् ।

---

१. चिन्तयन्ति.

न्यस्तात्मनस्त्वय्यखिलेश्वरे स्यात्
संरक्षणे धूर्वहता तथा ते ॥ ६९ ॥

मुकुन्द! के के न तथा महान्तः
समर्प्य सर्वं त्वयि विश्वबन्धौ ।
अवापुरामोदरसैकसान्द्रं
तवाङ्घ्रियुग्मं परमश्रमेण ॥ ७० ॥

जितान् स्वपुत्रान् बलिना निरीक्ष्य
खिन्नादितिः काश्यपसूपदिष्टम् ।
सा द्वादशाहं स्म पयोव्रतं वै
चचार भक्त्या वरमाप्तुकामा ॥ ७१ ॥

यथावराप्ति श्रवणर्क्षयुक्ते
सा द्वादशीपुण्यदिने भवन्तम् ।
बटुस्वरूपं सुषुवेऽतिधन्या
तोष्टूय्यमानं सुरसिद्धसङ्घैः ॥ ७२ ॥

हरेऽवतीर्णस्य स काश्यपोऽसौ
भाग्याम्बुधिः साधु समं स्वपत्न्या ।
तज्जातकर्मादिकमाशुकर्म
चक्रे प्रमोदाश्रुपरिप्लुतस्ते ॥ ७३ ॥

ततः कदाचिद् बलियज्ञवाटं
प्राप्तो भवांस्तस्य मदापनुत्त्यै ।
स्तुत्वा ययाचेऽथ पदत्रयेण
मेयां भुवं नाथ! विनीतवेषः ॥ ७४ ॥

---

१. द्वादशीति तिथिविशेषस्य संज्ञा.

काव्येन शप्तोऽपि तदीयवाक्य-
स्योल्लङ्घनान्नो बत भो दिशेति ।
पदत्रयं हन्त ददौ स तुभ्यं
सुरारिनाथो विभवावलिप्तः ॥ ७५ ॥

पदद्वयेनैव समस्तलोक-
माक्रम्य मे देहि पदं तृतीयम् ।
इत्यर्थितोऽसौ भवता मदीये
मौलौ निधेहीति भवन्तमूचे ॥ ७६ ॥

बद्धोऽथ नागैः स्वपितामहेन[1]
संसान्त्वितश्चाथ पितामहस्य ।
वाचा विमुक्तो भवदाज्ञयैव
रसातले वीतमदो न्यवात्सीत् ॥ ७७ ॥

ऐश्वर्यगर्वान्वितमानसोऽपि
स सर्वमप्यार्पितवान् यतस्ते ।
ततो गृहद्वारि गदाधरोऽस्य
गदाग्रजस्त्वं सततं विभासि ॥ ७८ ॥

स्वर्गाधिपत्यं बलशासनाय
वितीर्य भूमन्! सहजैः स्वकीयैः ।
तामध्यवात्सीरमरावतीं त्व-
मुपेन्द्रसंज्ञालसितो मुरारे! ॥ ७९ ॥

इयं हि गाथा वटुरूपिणस्ते
प्रकाशयन्ती बलिगर्वभङ्गम् ।

---

१. प्रह्लादेन.

जयत्यभीक्ष्णं धनिनो मदाद् द्राग्
विमुच्य भक्तिं त्वयि वर्धयन्ती ॥ ८० ॥

युधिष्ठिरो दिग्जयलब्धसम्पदं
निरीक्ष्य सीमारहितां महीपतिः ।
यथार्हमेनामुपयोक्तुमुद्यतः
समाह्वयत् त्वां सुकृती स्वपत्तनम् ॥ ८१ ॥

समागते त्वय्यथ भक्तवश्ये
पुरं स्वकीयं स भवन्नियोगात् ।
आरब्धवानच्युत! राजसूया-
ह्वयं क्रतुं द्राग्विधिवत् सदीक्षः ॥ ८२ ॥

अवन्तिचीनद्रामिलाङ्गवङ्ग-
कश्मीरकर्णाटकगुर्जरेशाः ।
महीभृतो धर्मसुतं यथार्हं
कृतोपचाराः सहसा प्रणेमुः ॥ ८३ ॥

क्रतोः समाप्तौ क इहाग्र्यपूजा-
मर्हत्युपेतेष्विति संशयानम् ।
नृपं समाश्वास्य शशंस भीष्म-
स्तवैव पूज्यत्वमिहाखिलात्मन्! ॥ ८४ ॥

ऋतेऽथ चैद्यप्रमुखान् समस्ते
तुष्टे जने तां निशमय्य वार्त्ताम् ।
धौम्यं पुरस्कृत्य तवाग्र्यपूजां
सर्वात्मना धर्मसुतो वितेने ॥ ८५ ॥

अमर्त्यमर्त्यासुरसिद्धनाग-
गन्धर्वविद्याधरयातुयक्षाः ।
मृगाः खगाः भूरुहवीरुधोऽपि
तदा[1] विसीमां किल तृप्तिमापुः ॥ ८६ ॥

भवद्विनिन्दापरभाषितानि
चैद्येन तावद् बहु जल्पितानि ।
द्रुतं तृणीकृत्य भवत्प्रशंसां
मध्येसभं शान्तनवश्चकार[2] ॥ ८७ ॥

समुद्यतं तं[3] त्वथ यज्ञभङ्गं
कर्तुं नृपे सान्त्वयितुं प्रवृत्ते ।
निवार्य भीष्मोऽकथयत् खलानां
वक्ता हरिस्तूत्तरमित्यशङ्कम् ॥ ८८ ॥

शौरे! त्वयागश्शतकेऽपि सोढे
भूयोऽपराधप्रवणस्त्वयीशे ।
चक्रे स चक्रेण निकृत्तशीर्ष-
स्ततस्त्वदैक्यं स ययौ विशुद्धः ॥ ८९ ॥

ततः समाप्तेऽजित! राजसूये
क्रतौ नृपेन्दुर्यशसा विराजन् ।
विधाय सद्योऽवभृथं नगर्यां
स्वबन्धुवर्गैः ससुखं न्यवात्सीत् ॥ ९० ॥

सर्वात्मनेत्थं भवदर्पणेन
सन्तोऽभिजग्मुर्मुदमव्ययां यत् ।

---

१. त्वदग्रपूजाकरणसमये. २. भीष्मः. ३. शिशुपालम्.

तस्मादियं चात्मनिवेदनाख्या
भक्तिर्निषेव्या भुवि सर्वलोकैः ॥ ९१ ॥

इतीह भूमन्! कथिता मयासौ
तवेश! भक्तिर्नवधा स्मृता सा ।
यामाह पूर्वं दनुजार्भकेभ्यः
कायाधवस्त्वत्पदसक्तचित्तः ॥ ९२ ॥[1]

एकत्र चाप्यासु हि भक्तिपद्धति-
ष्वासज्जमानो न भवाय कल्पते ।
पाथोजनाभाथ नवस्वपीह यः
संसक्तचेताः स पुमांस्तु किं पुनः ॥ ९३ ॥

सुदुर्लभं प्राप्य ततो नरत्वं
तत्रापि वर्णे जननं प्रशस्ते ।
त्वत्पादपङ्केरुहभक्तिमेव
यतेत लब्धुं मनुजो मनीषी ॥ ९४ ॥

यावन्मनो वै विषयेषु लोलं
भवेन्न तावत् स्थिरता हि भक्तेः ।
अतश्च तामर्जयितुं सदैव
पुंसा विरक्तिः सहसावलम्ब्या ॥ ९५ ॥

यदृच्छयाप्तेन धनेन तुष्टः
सुखेष्वसौ वैषयिकेष्वसक्तः ।

---

१. प्रह्लादः.

निरस्तमानश्च भवेदवैरः
समस्तभूतेषु दयापरश्च ॥ ९६ ॥

स पुण्यतीर्थाटनतत्परश्च
नयेत कालं तव सत्कथाभिः ।
विहाय वै लौकिकभाषितानि
जपेच्च दामोदर! माधवेति ॥ ९७ ॥

इत्थं विरक्तिः सुदृढोदिता चे-
ज्जायेत भक्तिः स्वयमेव पुंसः ।
तया पुनर्ज्ञानमुदेति तेन
प्राप्नोति मुक्तिं च चतुष्प्रकाराम् ॥ ९८ ॥

सलोकता चैव समीपता च
सारूप्यसायुज्यगती[1] इतीश! ।
मुमुक्षवो मुक्तिगतिं चतुर्धा
विदुर्बुधास्त्वत्कृपयैव लभ्याम् ॥ ९९ ॥

सलोकता स्याद् वसतिर्विकुण्ठे
समीपता स्यात् त्वदुपान्तलब्धिः ।
सारूप्यमुक्तिश्च दरारिमत्त्वं[2]
सायुज्यमुक्तिस्त्वयि लीनता स्यात् ॥ १०० ॥

ईदृग्विधा मुक्तिगतीरवाप्तुं
भोक्तुं च कामान् भुवनेष्वभीष्टान् ।

---

१. सारूप्यगतिः सायुज्यगतिश्च. २. शङ्खचक्रवत्त्वम्.

या हेतुभूता तव पादभक्ति-
रुदेतु सेयं मनसि स्थिरा मे ॥ १०१ ॥

इति स्वातिश्रीरामवर्मवञ्चिमहाराजविरचितायां भक्तिमञ्जर्यां
दशमशतकम् ।

---

ग्रन्थविषया कविप्रार्थना ।

इत्थमच्युत! भवत्कृपालवात्
पूर्त्तिमद्य गमिता कथञ्चन ।
प्रीतिमावहतु पद्मनाभ! ते
त्वत्पदाम्बुरुहभक्तिमञ्जरी ॥

पुष्पसङ्गमवशाद्धि सूत्रम-
प्युह्यते शिरसि मानवैर्यथा ।
वर्ण्यवैभववशात् सतां मुदे
स्यात् तथेयमपि भक्तिमञ्जरी ॥

---

**समाप्ता चेयं भक्तिमञ्जरी ।**

शुभं भूयात् ।